# DECLARATION

| | |
|---|---|
| Name of the Journal | RITAAYANI |
| Place of Publication | Ritaayani, Plot No. - 103,<br>PO-Barabhum, Barabazar, Purulia,<br>723127, West Bengal |
| Period of Publication | Half Yearly<br>(January- June and July –December) |
| President | Professor Dr. Gopal Krishna Dash<br>Department of Sanskrit, Utkal University,<br>Vani Vihar , Bhubaneswar, Odisha |
| Secretary | Dr. Jagamohan Acharya<br>Kharagpur College, Inda, Kharagpur<br>Paschim Medinipur, 721305, West Bengal |
| Joint Secretary | Dr. Umakanta Panda<br>G. S. College , Vedavyasa , Rourkela, Odisha |
| Treasurer | Dr. Chandrakanta Panda<br>B. T. M. College,Bbarabhum, Barabazar,Purulis,<br>723127, West Bengal |
| Members | Dr. Buddheswar Sarangi<br>SVAS Mahavidyalaya, Kolkata<br>Dr. Jogeswar Mahanta<br>SJSV, Puri, Odisha<br>Smt.Swagatika Panda,<br>Kanhenipur, Jajpur Road, Odisha |
| Chief Editor | Dr. Chandrakanta Panda<br>B.T.M. College, Barabhum, Barabazar, Purulia,<br>723127, West Bengal |
| Editor | Dr. Jagamohan Acharya<br>Department of Sanskrit,<br>Kharagpur College, Inda, Kharagpur<br>Paschim Medinipur, 721305, West Bengal |

***I hereby declare that the above mentioned information is correct to the best of my knowledge and belief.***

Date : 31.12.2021

Sd/

Professor Dr. Gopal Krishna Dash

(President)

**Few Words :**

The main aim is to provide an open forum for the student, teacher, educator, research scholar etc. to encourage original and innovative thinking in Sanskrit through presentation of different ideas,critical thinking of contemporaty problems,views nd experiences on improves educational practice. This contains through provoking articles by distinguished scholars on important issues,discussions,analysis of different issues and problems.

All the opinions and views expression in this journal are those of the authors and do not necessairly reflect the position of the editorial board and advisory board.

**For the attention of the contributor —-**

The contributers should send their articles,research papers on E-mail ID-jagamohanacharya@gmail.com, ckpanda0203@gmail.com sushant.sanskrit@gmail.com or contact with the mobile no.- 09002231586,09853134374,09547252225 .

The contributors should send a certificate to the effect that the article/paper has neither been published in any journal nor it has been sent for publication in anywhere else.

Writers are request to send their articles both hard and soft copies. It should not exceed 4500 words.The article should written in Sanskrit and English language.For English language font size 12 in Times New Roman and for Sanskrit language font size 14 in AkrutiDevPriya. Each paper should have an abstract about 100-150 words and the research paper are to be prepared with proper guidelines.Articles not considered for publication will not be sent back.

**For Membership**

| | |
|---|---|
| Each Issue : | Rs. 300/- |
| Annual : | Rs. 500/- |
| For six years : | Rs. 3000/- |
| For Life member : | Rs 10,000/- |

Subscribers may kindly make their paymenr through demand draft only.DDs should be drawn in favor of Chandrakanta Panda, Barabazar B.T.M College,Purulia,West Bengal, payble at SBI, Barabazar. (Branch Code-2008)

# CONTENTS

# संपादकीयम्

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।(रघुवंशम्,१.१)

अस्माकं हर्षस्य विषयः यत् **ऋतायनी** तस्याः विंशतिसंख्यां पाठकानां सम्मुख उन्मोचयति।

काव्यशास्त्रस्य अनुशीलनेन प्रतीयते यत् काव्यशास्त्रे विशेषतः षड्संप्रदायाःसन्ति। परन्तु दिनेदिने यथा भाषायाः परिवर्तनं भवति तथैव साहित्यपरम्परायां तथा साहित्यसमालोचनायामपि। आधुनकता पारस्परिकसम्बन्धं नीत्वा काव्यशास्त्रस्य अक्षुन्नतां नयति। लौकिकजगतः अलौकिकजगतः च स्त्रस्टा अर्धनारीश्वरः। पार्वतीपरमेश्वरौ लौकिकजगतः आधारौ। तथैव अलौकिकजगतः वागर्थौ। वागर्थयोः सम्बन्धः अलौकिकजगति हृदि स्पर्शति। उक्तं च वाक्यपदीये, नित्याः शब्दार्थसम्बन्धाः-, अनादिनिधनं ब्रह्म- इति। शब्दार्थज्ञानं विना वाक्यं नैव प्रसरति। सम्बन्धः तस्य मध्यमप्रस्थानः। समालोचना मतोपरि प्रतिष्ठितः। काव्यशास्त्रस्य आयामः कवेः कृतौ प्रतिभाति।

अस्मिन् विशेषाङ्के समालोचकाः तेषाम् नूत्नदृष्टिः प्रकटयन्ति। गवेषकानां दिशादर्शनं, रसिकानां रसमाधुर्यं, भावुकानां भावावेगं,पाठकानां पठनधारां, लेखकानां लेखापद्धत्तिं चादि तात्त्विकालोचनं सन्दर्भेऽस्मिन् आलोचकाः आलाचयन्ति। लेखकाः तेषां शोधप्रवन्धैः ऋतायन्याः सत्यमार्गं प्रसारयन्ति। येन अस्माकं सफलता दिशिदिशि पल्लविता भवति।

साधुसङ्गमं सुखाय दुःखाय च। सत्य- निष्ठा- त्याग- तपस्या- समर्पण- सेवादि अनुकूलचिन्तनेन मानवः दिव्यमानवेन परिवर्त्तनं भवति। तत्तु सुखाय। अकरणीयकार्ये दिव्यानन्दस्यानुभूतिः न।तत्तु दुःखाय। ऋतायनी साधुसान्निध्येन अनुकूलचिन्तनेन सदा प्रसरतु इति अस्माकं प्रयासः। सत्यस्योन्मोचने ऋतायनी सततं कार्यरता।

प्रकाशनमिदं विदुषां सुरताम् आनन्दायभूयात् इति भगवतः चरणकमले प्रार्थना।

शोधपतिकायाः अस्याः परिप्रकाशे येषां सज्जनानां सहयोगं अस्ति तेषां सर्वेषां कृते सादरं सविनयं कृतज्ञतां विज्ञापयामः।

**संपादकाः**

## संस्कृतसाहित्यशास्त्रे भक्तिरसः

डः तपनशङ्करभट्टाचार्य्यः

संस्कृतसाहित्यशास्त्रे रसप्रस्थानस्य गुरुत्वपूर्णं स्थानं वर्तते। आचार्यभरतेन रसविषयमवलम्ब्य सूत्रितम्- 'विभावानुभावव्यभिचारिसंयोगद् रसनिष्पत्तिः।[१] विभावानुभावव्यभिचारिभावस्य संयोगेन रसनिष्पत्तिर्भवति। रसं विना काव्यमानन्ददायकं न भवति। नाट्यशास्त्रे पुनः उक्तम्- 'तत्र रसानेव तावदादौ अभिव्याख्यास्यामः। न हि रसादृते कश्चिदर्थः प्रवर्तते।'[२] भरतः नाट्यरसमवलम्ब्य आलोचितवान्। रसानां संख्याविषये आलंकारिकाणां मध्ये मतभेदो दृश्यते। भरतमते शृङ्गारहास्यकरुणरौद्रवीरभयानकवीभत्स-अद्भुतभेदेन अष्टौ रसाः। नाट्यशास्त्रस्य षष्ठे अध्याये आचार्यो भरतः शान्तरसस्यापि उल्लेखं कृतवान्। तेन उक्तम्-

'न यत्र दुःखं न सुखं न द्वेषो नापि मत्सरः।
समः सर्वेषु भूतेषु न शान्तः प्रथितो रसः।।'[३]

आलङ्कारिकाणां मध्ये आचार्य उद्भटः सर्वप्रथमः शान्तरसस्य अस्तित्वं स्वीकृतवान्। भट्टलोल्लटमते रसाश्रयविषयकं ज्ञानं प्रत्यक्तप्रमाणवेद्यं भवति। प्रमितिकरणं ज्ञानं प्रमाणम्। प्रत्यक्तम्, अनुमानम्, उपमानं शब्दश्च प्रमितिरुपज्ञानस्य कारणं भवति। इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्तम्। लौकिकालोकिकभेदेन सन्निकर्षो द्विविधो भवति। लौकिकप्रत्यक्तो विद्यामानविषयेण सह इन्द्रियस्य सन्निकर्षो भवति। अलौकिकप्रत्यक्तो अविद्यमानविषयेण सह अपि सन्निकर्षो भवति। अयोग्यविषयेण सह अपि सन्निकर्षो भवति। सामान्यलक्तणसन्निकर्षेण अतीतविषयस्य अनागतविषयस्यापि प्रत्यक्तं भवति। ज्ञानलक्तणसन्निकर्षेण अविद्यमानविषयस्य विद्यामानस्य अयोग्यविषयस्यापि प्रत्पक्तं भवति। योगजसन्निकर्षेण सर्वेषां विषयाणां प्रत्यक्तं भवति। सामान्यलक्ताणसन्निकर्षण एकघटप्रत्यक्तेण घटसामान्यस्य ज्ञानं भवति। ज्ञानलक्तणप्रत्यासत्त्या 'सुरभि चन्दनम्'— इत्यत्र चाक्तुषप्रत्यक्तेण चन्दनस्य सुरभित्वस्य ज्ञानं भवति।

चैतन्यदेवस्य ये तावदनुगामिनः सन्ति ते भक्तिरसं स्वीकुर्वन्ति। एते खलु कविकर्णपूरः, रूपगोस्वामी, जीवगोस्वामी, मधुसूदनसरस्वती इत्यादयः। भक्तश्रेष्ठः कृष्णदासकविराजः तदीये 'चैतन्तचारितामृत' ग्रन्थे भक्तिरसतत्वविषयकं सूक्तम् आलोचनं कृतवान। तस्मिन् समये हेमचन्द्र-भानुदत्त-जगन्नाथप्रभृतयः मुख्या आलंकारिका विद्यमाना आसन्। परमानन्दलाभ एव काव्यस्य मुख्यप्रयोजनम्। रसनिष्पत्तिप्रक्तियाविषये सर्वेषां मतैक्यं वर्तते। भक्तिरस एव मुख्यो रस इति वैष्णवालंकारिका वदन्ति। विभावैर्विभावितोऽनुभावैरनुभावितो व्यभिचारिभिः संयुक्तो हि स्थायीभावो रसपदवाच्यः। उक्तञ्च काव्यप्रकाशे-

कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः।।

विभावानुभावास्तत् कथ्यन्ते व्यभिचारिण:।

व्यक्त: स तैर्विभावाद्यै: स्थायी भावो रस: स्मृत:।।[४]

तत्र विभाव: खलु - कायिकवाचिकसात्तिकाभिनयाना विभावनम् अर्थात् ज्ञानम् येनासौ विभाव:। उक्तञ्च नाट्यशास्त्रे - 'विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इति विभाव: यथा विभावितं विज्ञातार्थमित्यनर्थान्तरम्।[५] तत्र अनुभाव: खलु कारणमनु यादृशं कार्य भवति तादृश एव विभावानुभावो भवति। अनु पश्चात् भवन्तीति अनुभावा:।' अनुभावविषये भरतेन उक्तम् – 'अथानुभव इति कस्मात्। उच्यते अनुभाव्यते अनेन वागङ्गसत्त्वकृतोऽभिन्य इति।'[६]

वि एवं अभि-पूर्वकाद् णिजन्त 'चर्'धातो: णिनि-प्रत्ययात् व्यभिचारिन्-शब्दो निष्पन्नो भवति। विशोषेण अभित: सर्वाङ्गव्याप्तितया रत्यादीन् स्थायिन: काये चारयन्ति रञ्चारयन्ति मुहुर्मुहुरभिव्यञ्जयन्तीति वा व्यभिचारिण:। तथा चोक्तं काव्यप्रकाशस्य रामनकृतटीकायाम्- 'विशेषेणाभित: चरन्तीति व्यभिचारिणा:।'[७]

वल्लभरुपालम्बनविभावै: भगवान् एव तस्य गुण-चेष्टा-प्रसाधन-तुलसी-चन्दनादि-उद्दीपनविभावै:, नृत्यगीत-अश्रुपात-नेत्रनिमीलनादि-अनुभावै:, रोमाञ्चादि-सात्विकभावै:, निर्वेदादि-व्यभिचारिभि:, भगवदाकारात्मकप्रेमस्वरुपस्थायिभावेन साक्तात् परमानन्दस्वरुप-भक्तिरस: अभिव्यक्तो भवति। उज्ज्वलनीलमणिग्रन्थे दृश्यते–

'अस्मिन्नालम्भना प्रोक्ता: कृष्णस्तस्य च वल्लभा:।'

'रसो वै स:'– इत श्रुतिवचनेन प्रतिपादितसस्य साक्ताद् अनुभव: भक्तिरसे एव वर्तते। कविकर्णपुर: प्राकृताप्राकृताभासभेदेन रसस्य त्रैविध्यं स्वीकरोति। लौकिकनायकनायिकाम् अवलम्ब्य यो रस: स प्राकृतो रस:। स दुष्यन्तशकुन्तला-मालतीमाधवादीन् आश्रित्य भवति। अलौकिकनायकनायकामाश्रित्य यो स अप्राकृतरस:। स श्रीकृष्णराधिकामाश्रित्य भवति। अनौचित्यादिप्रवर्त्तितो रस: रसाभास:। मम्मटविश्वनाथादय: आलङ्कारिका: रसाभासं रसरूपेण न स्वीकुर्वन्ति। किन्तु कविकर्णपूरमते रसाभास: पृथग्रस इति। तेन उक्तम्-

'स च रसाभास: भवन्नपि रसपोषक:।'[८]

लौकिकालङ्कारग्रन्थे परकीया रतिरेव रसाभास:। किन्तु वैष्णवालङ्कारिकग्रन्थे परकीया रतिरेव श्रेष्ठो रस:। तथा चोक्तम् अलङ्कारकौस्तुभे- 'अप्राकृते तु परोढरमणीरतिरेव सर्वोत्तमतया भूयसी श्रुयते; न तस्या:अनौचित्यप्रवर्त्तितत्वम् अलौकिकसिद्धेर्भूषणमेव न दूषणमिति न्यायात्; तर्कागोचरत्वाच्च। तथा च,'अलैकिकाश्च ये भावा न तांस्तर्केण योज्येत् इति च।'[९] वैष्णवालङ्कारिका: परकीयां रतिं न निन्दन्ति। अतएव उक्तम्–

'सा च तस्मिन परमप्रेमरूपा।

अनिर्वचनीयं प्रेमस्वरूपम्।।'

भरतमते अष्टौ एव रसा:। नट्यशास्त्रे उक्तम् -

'शृङ्गारहास्यकरुणा रौद्रवीरभयानका:।
वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसा: स्मृता:।
एते ह्यष्टौ रसा: प्रोक्ता दुहिणेन महात्मना।'[१०]
भक्तिरसायनग्रन्थे मधुसूदनसरस्वती भक्तिरसविषये एवम् उक्तम्-
'रतिर्देवादिविषया व्यभिचारी तथोर्जित:।
भाव: प्रोक्तो, रसो नेति यदुक्तं रसकोविदै:।।
देवन्तरेषु जीवत्वात् परानन्दाप्रकाशनात्।
तद् योज्यं परमानन्दरुपे न परमात्मनि।।'[११]

वैष्णवालङ्कारिकमते यो रस: स आनन्ददायक:। अतएव भरतेन उक्तम्-'रस इति क: पदार्थ: ? उच्यते आस्वाद्यत्वात्।' भक्तो यदा प्रेमाभिभूतेन चितेन आनन्दस्वरूपस्य ईश्वरस्य वैचित्र्यमयं माधुर्यम् आस्वादयति तदा परिमितव्यक्तिबोध: शिथिलो भवति, रजो गुण: तमो गुणश्च मन्दीभवति, सत्त्वगुणस्य वृद्धिर्भवति। एषा भगवत्प्रीतिरेव भक्तिरस:। ईश्वरो न केवलं ज्ञानमय:, अपि तु आनन्दस्वरुप:। 'रसो वै स:'। 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशान्ति।'[१२] भक्तिरसस्य शान्तिरसे अन्तर्भावो भवति इति अभिनवगुप्तेन यदुक्तं तत्र समीचीनम्। भगवत: अनुराग एव भक्तिरस:। वैष्णावालङ्कारिका: तं कृष्णरति: इति कथयन्ति। तथा चोक्तं भक्तिरसामृतसिन्धौ–

'एषा कृष्णरति: स्थायी भावो भक्तिरसो भवेत्।'[१३]
शान्तरसविषये नाट्यशास्त्रे उक्तम्-
'न यत्र दु:खं न सुखं न द्वेषो नापि मत्सर:।
सम: सर्वेषु भूतेषु स शान्त: प्रथितो रस:।।'[१४]

भक्तिरसं शान्ते न अन्तर्भावमर्हति। तथा चोकं पण्डितराजजगन्नाथेन-'न चासौ शन्तेऽन्तर्भावमर्हति अनुरागस्य वैराग्यविरुद्धत्वात्।'
विभावानुभावव्यभिचारिसात्त्विकभावप्रसङ्गे श्रीविश्वनाथचक्रवर्त्तिना भक्तिरसामृतसिन्धुग्रन्थे उक्तम्–

'यत्र विषये भावो भवति स विषयालम्बनविभाव: कृष्ण:। यो भावयुक्तो भवति स आश्रयालम्बनविभावो भक्त:। ये कृष्णं स्मारयन्ति वस्त्रालङ्कारादयस्ते उद्दीपनविभावा:। ये भावं जनयन्ति तेऽनुभावा: नृत्यगीतस्मितादय:। ये चित्तं तनुं च क्तोभयन्ति ने सात्त्विका:।'[१५] सुखलाभस्य उपाय: खलु धर्मादिचतुर्वर्ग:। श्रीमद्भागवते भक्तियोगस्य परमपुरुषार्थता उक्ता।

'ज्ञानवैराग्ययुक्तेन भक्तियोगेन योगिन:।
त्कोमाय पादमूलं मे प्रविशन्त्यकुतोभयम्।।
एतावानेव लोकेऽस्मिन् पुंसां नि:श्रेयसोदय:।
तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम्।।'

जीवात्मनि परमात्मनः अनुसन्धनमेव भक्तिः। शङ्कराचार्येण विवेकचूडामणिग्रन्थे उक्तम्-

'स्वस्वरुपानुसन्धानं भक्तिरित्यभिधीयते।

स्वात्मतत्त्वानुसन्धानं भक्तिरित्यपरे जगुः।।'

उपनिषदः ऋषयः ब्रह्मविद्यां सर्वविद्योत्तमा इति वदन्ति। वैष्णवालङ्कारिका भाक्तिं ब्रह्मविद्यापेकाया प्रशस्यतरा इति मन्यन्ते। अतएव भक्तिरसामृतसिन्धुग्रन्थे समुपलभ्यते - 'द्रवीभावपूर्विका हि मनसो भगवदाकारता सविकल्पकवृत्तिरूपभक्तिः द्रवीभावानुपेता-द्वितीयात्ममात्रगोचरा निर्विकल्पमनसो वृत्तिर्ब्रह्मविद्या। भगवद्गुणगरिमग्रन्थनरूग्थश्रवणं भक्तिसाधनं तत्त्वमस्यादिवेदान्तमहावाक्यं ब्रह्मविद्यासाधनम्। भगवद्विषयकप्रेमप्रकर्षो भक्तिफलम्, सर्वानर्थमूलाज्ञाननिवृत्तिर्ब्रह्मविद्याफलम्। प्राणिमात्तस्य भक्तावधिकाः, ब्रह्मविद्यायाम् तु साधचतुष्टयसम्पन्नस्य परिब्राजकस्याधिकारः।' रसस्य अलौकिकविषये स्थायिभावस्यापि अलौकिकत्वमपेत्तते। प्राकृते रस एव सन्ति। सर्वेषां रसानाम् आश्रयः खलु गोपीजनवल्लभः भगवान् श्रीकृष्णः। यः रसनिर्यासस्य आस्वादनार्थं भूतले अवतीर्णोऽभवत्। अनाएव उक्तम् उज्जवलनीलमणिग्रन्थे -

'लघुत्वमत्र यत् प्रोक्तं तत्तु प्राकृतनायके।

न कष्णो रसनिर्यासस्वादार्थमवतारिणि।।'

भगवत्प्रीतिः लोकिकप्रितिवद् न आन्तरवृत्तिमात्रम्। भक्तिभावस्य अलौकिकत्व-निरूपणावसरे मधुसूदनसरस्वातीपादेन उक्तम्-'दुते चिते प्रविष्टा या गोविन्दाकारता स्थिरा।

सा भक्तिरित्यभिहिता .. . . . . . ....।।

भक्तिभावे रजस्तमोगुणस्य छायामात्रं न वर्तते। यतः तस्य विषयो न जडवस्तुविषेशः। सच्चिदानन्दात्मकः स्वयं भगवान् भक्तस्य द्रवीभुते चित्ते प्रतिविम्बितो भवति। भागवतः प्रतिविम्बनमेव भक्तिरसस्य वैशिट्यम्।अतएव तत्र भक्तिभावे निरवच्छिन्नसुखं विना अन्यत् किमपि न वर्तते। अतएव भक्तिरसायनग्रन्थे उक्तम् -

भगवान् भक्ताधीनः। अर्थात् भक्तिभावेन भगवान् अपि वशीभुतो भवति। एवम्भूतस्य भक्तिस्वरूपस्य वर्णनावसरे श्रीवलदेवविद्याभुषणेन सिद्धान्तरत्तग्रन्थे उक्तम् -

'भगवद्वशीकारहेतुभुता भक्तिः किं स्वरुपेति, किं प्राकृतसत्त्वमयज्ञानानन्दरूपा, किंवा भगवत्स्वरूपज्ञानानन्दरूपा, अथवा जैवज्ञानानन्दरूपा, उत ह्लादिनीसारसमवेतसम्वित्- साररूपेति। नाद्यः, भगवतो मायावश्यत्वाश्रवणात्, स्वतः पूर्णत्वाच्च। न द्वितीयः अतिशयासिद्धेः। नापि तृतीयः जैवयोस्तयो क्तोदिषत्वात्। किन्तु चतुर्थ एवासौ भवेत्।'

भक्तिर्यद्यपि एकः अभिन्नश्च तथापि अधिकारिभेदेन बहुरूपेण प्रतिभाति। भक्तेः विविधा भेदाः कल्पिता भवन्ति। स एव आरोपितः न तु स्वाभाविकः। श्रीमद्भगवद्गीतायां भक्तेश्चतुर्विधत्वम् उक्तम्–

'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुनः।

आर्तो जिज्ञासुरर्थार्थो ज्ञानी च भरतर्षभ।।''

भक्तिश्चतुर्विधा - आर्त्तिभक्तिः, जिज्ञासाभक्तिः, अर्थार्थिताभक्तिः, ज्ञानभक्तिश्च। एषु भक्तिषु ज्ञानभक्तिः उत्तमा। श्रीमद्भागवते नवविधभक्तेः वर्णनं परिदृश्यते –

'श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्।।
इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलकणा।
क्रियते भगवत्यद्धा तन्मध्येऽधीतमुत्तमम्।।'

ईश्वरविषयिणी सुखानुभूतिरेव भक्तिरसः। नारदभक्तिसूत्रे भक्तस्य आसक्तिस्वरूपा भक्तिः एकादशविधा इति कथितम् 'गणमाहात्म्यासक्तिरपासाक्तिपूजासाक्तिस्मरणा-सक्तिदास्.ासक्तिसख्यासक्तिवात्यल्यासक्तिकान्ता-

यकत्यात्मतन्मयतासक्तिपरमविरहासक्तिरूपैकधाप्येकादशधा भवति।

भक्तिरस एव अखण्डः अलौकिकचमत्कारसारश्च।

एवं पेण भक्तिरसस्य आलोचनं श्रेष्ठत्वञ्च वैष्णावालङ्कारिकैः प्रतिष्ठापितम्। नाट्यशास्त्रम्, अलङ्कारकौस्तुभः, उज्जलनीलमणिः, भक्तिरसायनः, भक्तिरसामृतसिन्धुः, चैतन्यचरितामृतम्, श्रीमद्भागवतम्, गीतगोविन्दम् – इत्यादिषु इत्यादिषु शास्त्रेषु भक्तिरसस्य महत्वपूर्णमालोचनं समुपलभ्यते। इति शम्।

**तथ्यसूत्रम्**


१. नाट्यशास्त्रम्, षष्ठपरिच्छेदः, पत्राङ्कः- २७१
२. नाट्यशास्त्रम्, षष्ठपरिच्छेदः, पत्राङ्कः- २७१
३. नाट्यशास्त्रम्, षष्ठपरिच्छेदः, पत्राङ्कः- ३२९
४. काव्यप्रकाशः, उल्लासः – ४/२७ – २८
५. नाट्यशास्त्रम्, पत्राङ्कः- ३४६
६. नाट्यशास्त्रम्, पत्राङ्कः- ३४७
७. उज्ज्वलनीलमणिः – ४
८. अलङ्कारकैस्तुभः – ५/७२
९. अलङ्कारकैस्तुभः – ५/७२
१०.नाट्यशस्त्रम् - ६/१६
११. भक्तिरसायनः - २/७५ - ७६
१२. तैत्तिरीयोपनिषद् - ३/६
१३. भक्तिरसामृतसिन्धुः, दक्तिणविभागः – १/५
१४. नाट्यशस्त्रम् - ६/१०६

१५. भक्तिरसामृतसिन्धुः, पत्ताङ्कः – ११८-११९
१६. श्रीमद्भागवतम् – २/२५/४३-४४
२७. भक्तिरसामृतसिन्धः, पत्राङ्कः – १९-२०
२८. उज्ज्वलनीलमणिः – १/१६
१९. भक्तिरसायनः – २/१
२०. भक्तिरसायनः – १/२१
२१. सिद्धान्तरत्तः, पत्राङ्कः – ३५
२२. श्रीमद्भगद्गीता – ७/१६
२३. श्रीमद्भागवतम् – ७/५/२३-२४
२४. नारदीयभक्तिसूत्रम् - ८२

**सहायकग्रन्थपञ्जी**

१. अलंकारकौस्तुभः श्राशिवप्रसादभट्टाचार्य्यः , राजशाही, १९३४
२. इशादिदशोपनिषदः,मोनीलाल बनारसीदास, दिल्ली, २०००
३. उज्जवलनीलमणिःव्रजनाथमिश्रः, ४र्थ सं, मुर्शिदावादः, ९८८४ शककाब्दः।
४. काव्यतत्त्वसमीक्ता, श्री नरीन्दनाथ चौधुरी दिल्ली , १९५९
५. काव्यप्रकाशः आर, भि कारमारकार ,वि.डि आर.आइ., १९३३
श्रीशिवप्रसादभट्टचार्य्यः कलिकाता, १९५९-३१
६. कृष्णभक्तिरसामृतम्, श्रीताराकुमारकविरलः।
७. गौडीयवैष्णवदर्शनम्, १म -५म खण्डः, श्रीराधागोविन्दनाथ, कालिकाता, १३६३-१३६७ वङ्गाब्द :।
८. नाट्यशास्त्र प्रथमखण्ड :,आर,एस्नागरः, के.एल्, योशी च,परिमल पाब्लिकेशन, दिल्ली २००३
९. भक्तिरसामृतसिन्धुः, गोस्वामिदामोदरशास्त्री, कलिकाता, १३४० वङ्गाब्दः।
१०. भक्तिरसायनः, दुःर्गचरणसांख्य-वेदान्ततीर्थः, कलिकाता, १३४०वङ्गाब्दः।
११. भक्तिसन्धर्भः कृष्णगोपलगोस्वामी, कलिकाता, १९६३
१२. भागवतपुराणः श्रीकुञ्जविहारिविद्याभूषणः।
१३. रससमीक्ता, डः रसारञ्जनमुखोपाध्यायः, कलिकाता।
१४. विवेकचूडामणिः, जीवानन्दविद्यासागरः, कलिकाता, १८७२
१५. वैष्णवदर्शनम्, श्रीराधागोविन्दनाथः, कलिकाता, १९५७-६०

अध्यापकः(एसोसियेट् प्रफेसर)
संस्कृतविभागस्य,यादवपुरविश्वविद्यालयस्य

## साहित्यशास्त्रे न्यायशास्त्रीयसिद्धान्तस्य प्रक्रियायोगः काव्यप्रकाशग्रन्थन्य विशेषसन्दर्भे

**डॉ. सुमन कुमार झा**

अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम्।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः।।[१]
कटुकौषधवत् शास्यमविद्याव्यधिनाशानम्।
आह्लद्यामृतवत् काव्यमविवेकगदापहम्।।[२]

नियमश्चायं कश्चन यल्लोकेऽस्मिन् प्रयोजनायोपकल्पितः सर्वेऽपि विषयःतदनुबन्धिशासनकरं शास्त्रमेकमपेक्षत एवेति। शास्त्रविधिमविदित्वा एव. यदि स्वबुद्धया इष्टमनिष्टं वा कल्प्यते,तदा अन्धगोलाङ्गलन्येन गर्ते पतनं, श्रयःप्रेयोभ्यां भ्रशश्चानिवार्य एव। अतएव अस्माकं भारतीयचिन्तने तत्तबोधास विविधानि शास्त्राणि प्रादुर्धूतानि तेषु शस्त्रेषु प्रदीप इव विलसति न्यायशास्त्रं समग्रसंस्कृतवाङ्मये।

शब्दार्थ-वृत्ति-गुण-दोष रीति-अलङ्कार-ध्वनि-रस-वक्रोक्ति-औचित्य-चमत्करादि-स्वरूप-निरूपणमुखेन काव्यस्वरूपप्रतिपादकं शास्त्रं साहित्यशस्त्रम्। काव्यसमालोचनाविधायिनी गुणवगुणपरीक्षाकारिणी च विद्या नाट्यशास्त्र-अलङ्कारशस्त्र- काव्यशास्त्र-सौन्दर्यशस्त्र- समदर्शन-क्रियाकल्प-साहित्यशास्त्रदिविविधपदैरभिहिता विद्वद्भिः। शास्त्रमिदमुत्तरोत्तरमन्तस्तलस्पर्शिनां विदुषां गभीरतरैः विचारैः काव्यसमालोचनायाः काव्यमूल्याङ्कनस्य च सीमानमेवाधिगतं सत् विश्वजनीनं, कविकर्मणः समप्रसाहित्यसाम्राच्यस्यानुशसकं सर्वशास्त्रसारूप समपद्यते।

इदमेव काव्यशस्त्रं क्रमशाः स्वरूपानुरूपेण साहित्यशब्देन व्यवहयते। सहितस्य भावःखलु साहित्यम्। सहभावश्च अष्टादशविद्याभिः चतुष्षष्टिकलाभिश्च। एवं हि युक्तमत्र साहित्यपदाभिधानमिति मन्यामहे। यथोक्तं राजशेखरेण पञ्चमीसाहित्यविद्येति यायावरीयः। सा हि चतसृणामपि विद्यानां निष्यन्दः। इति।[३]

लौकिकालौकिकभाषासम्पदधिगमाय नामव्याकरणं यथा शब्दानुशासनम् ,तथैव लौकिकलोकातीतसुन्दरतरभावसम्पधिगमायेदं साहित्यशास्त्रमपि रूपव्याकरण काव्यानुशासनं नाम। भाव-राग-ताल विज्ञान-परिगर्भितं सङ्गीतशास्त्रमिव, भारती-रस-तत्त्वविज्ञान-परिगर्भि तमिदं साहित्यशास्त्रमपि भरतोपज्ञमेव प्रवृत्तम्। यतः भरतमुनिप्रणीतं नाटयशास्त्रमेवासाः साहित्यविद्यायाः प्रप्रथमो समुपलब्धग्रन्थः।

तदिदं साहित्यशास्त्रं दोषापगमैः रस-ध्वनि-रीति-वृत्ति-वक्रोक्ति-गुण-अलङ्कार-शब्दपाक-चमक्तारादिसंवलनै-श्चोपपन्नं काव्यसौन्दर्य प्रकाशयति। यथाह वामनाचार्यः-काव्यं ग्राह्यमलङ्कारात्,

सौन्दर्यमलङ्कारः। स दोषगुणालङ्काराहानादानाभ्याम्। इति।४ शास्त्रस्यास्योपयोगित्वं प्रकाशयन निगदति आचार्यदण्डी-

**गुणदोषानशास्त्रज्ञः कथं विभजते जनः।**
**किमन्धस्याधिकारोऽस्ति रूपभेदोपलब्धिषु।।**

सर्वशास्त्रमर्मविज्ञानसन्दर्शनसमर्थं दृश्यश्रव्याद्यनन्तकाव्यप्रभेदानां रहस्योद्घाटनपरलङ्कारशास्त्रमिदं प्रप्रथमं कदा केनाविष्कृतमिति निर्दिष्टतया निर्णेतुं न शक्यते। परन्तु-

**जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च।**
**यजुर्वेदादभिनयान् रसानाथर्वणादपि।।५**

अपि च-शिक्षा, कल्पो, व्याकरणं, निरुक्तं, छन्दोविचितिः, ज्योतिषं च षडङ्गानि इत्याचार्याः। उपकारकत्वादलङ्कारः सप्तममङ्गमिति यायावरीयः। ऋते च तत्स्वरुपपरिज्ञाना-द्वेदार्थानवगतेः। यथा-

**द्वा सुपर्णा सजुजा सखाया समानं वृक्षं परिषष्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति।।**[६]

मन्त्रेऽस्मिन् उपमारुपकालङ्कारयोः वैशिष्ट्यं विदितमेवविदुषाम्। तत्र शास्त्रकाराणामाचार्याणाञ्च वचनमेवप्रमाणम्। एतेनान्यशास्त्रवत् साहित्यशास्त्रस्यापि वेदोपजीवकत्वं सिद्धमेव, तत एव साहित्यमूलं प्रतिपत्तव्यम्।

प्राचीनकालेऽस्मिन् भारतवर्षे यैराचार्यैर्मनीषिभिः काव्यशास्त्रीयसिद्धान्तानां विकासो निष्पादितः, ते न केवलं साहित्यशास्त्रमर्मज्ञा एवासन्, अपित्वन्येषामनेकेषां वेद-वेदाङ्ग-सर्वदर्शन-पुराणादीनां विविधविधशास्त्राणां विविधविद्यानां कलानाञ्च ज्ञातार आसन्। अतः स्वाभाविकमेवेतद् यत्साहित्यशास्त्रविवेचनप्रक्रिया शास्त्रान्तरैः प्रभाविता भवेत्। अयमेव हेतुर्यत्संस्कृतसाहित्यशास्त्रविकासेऽन्येषां शास्त्राणां प्रभावो परिलक्ष्यते। तत्रापरोऽपि हेतुर्विद्यते यत्काव्यं सकलविद्यानां शास्त्राणाञ्चायतनम्, अतः काव्येषु सकलशास्त्राणां विद्यानां कलानाञ्च चित्रणं तत्तद्सन्दर्भेषु क्रियते महाकविभिः। यथोक्तं राजशेखरेण-

**सकलविद्यास्थानैकायतिनं पञ्चदशं काव्यं विद्यास्थानम्' इति यायावरीयः गद्यपद्यमयत्वात् कविधर्मत्वात् हितोपदेशकत्वाच्च तद्धिशास्त्राण्यनुधावति'**[७]

साहित्यशास्त्रं प्राधान्येन यैः शास्त्रैः प्रभावितम्, तानि सन्ति व्याकरण-न्यायवैशेषिक-सांख्य-योग-मीमांसा-वेदान्त-उपनिषदश्च। शास्त्राणामेतेषां याः शास्त्रीयप्रक्रियाः विद्यन्ते ताः तत्तद्प्रकरणेषु, पदार्थनिरुपणप्रसङ्गेषु च साहित्यशास्त्रे उपात्ताः गृहीताश्च सन्ति। तासु न्यायशास्त्रीया या प्रक्रिया वर्तते सा साहित्यशास्त्रस्य विविधसन्दर्भेषु, साहित्यशास्त्रीयतत्त्वानां निरुपणप्रसङ्गेषु च क्वचित्समानतन्त्रेण, क्वचिच्च प्रतितन्त्रेण प्रवर्तिताऽस्ति। मयाऽत्र सङ्केतग्रहण-लक्षणाव्यापारयोर्निरुपणप्रसङ्गे या न्यायशास्त्रीयाप्रक्रिया गृहीता, सा एवोपस्थाप्यते।

संकेतग्रहणं कुत्र जायते, उत वा शक्तिग्रहस्य विषया: के सन्ति, विषयेऽस्मिन् मम्मटाचार्या: काव्यप्रकाशग्रन्थे चतुर्विधं मतमुपस्थापयन्ति। तत्र सर्वप्रथमं **'जात्यादि:'** इत्यनेन व्याकरणशास्त्रसम्मतं मतम्, **'जातिरेव'** इत्यनेन मीमांसाशास्त्रसम्मतं मतम्, **'तद्वान्'** इत्यनेन न्यायदर्शनस्य मतम्, 'अपोहो वा' इत्यनेन च बौद्धदर्शनस्य मतं प्रकटयन्ति। शब्दस्य संकेतितार्थाभिधायकत्वं सकलसंकेतितार्थज्ञानमन्तरेण न संभवतीति संकेतितमर्थ सविभागं दर्शयति- **संकेतितशचतुर्भेदो जात्यादिर्जातिरेव वा।**[८]

संकेतित: संकेतग्रहविषयोऽर्थ:, चतुर्विधो भवति। जात्यादि इत्यनेनात्र जाति-गुण-क्रिया-यदृच्छानां ग्रहणम्। महाभाष्यकारमतमिदम्। यथा-**गौ शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्ति:** इति महाभाष्यकार:।[९]

यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्याक्तिरेव, तथाप्यानन्त्याद व्यभिचाराच्च तत्र संकेत: कर्तु न युज्यते, इति गौ: शुक्लश्चलो डित्थ इत्यादीनां विषयविभागो न प्राप्नोतीति च तदुपाधावेव संकेत:। मीमांसकमतमाह जातिरेव वेति। सन्दर्भेऽस्मिन्-**तद्वान् अपोहो वा शब्दार्थ: कैशिचदुक्त**[१०] इत्यत्र **'तद्वान्'** इत्यनेन शक्तिग्रहसन्दर्भे न्यायदर्शनस्य सिद्धान्त: प्रवर्तते।

व्यक्तिरिशेषमनुपादाय तद्वान् सामान्यतो जातिमान् शब्दार्थ इति नैयायिकमतम्। नैयायिकानां मते न केवलं जातौ संकेतग्रह:, न च व्यक्तौ, स्वीकर्तु शक्यते। केवलं व्यक्तौ यदि संकेतग्रह: स्वीक्रियते चेदानन्तव्यभिचारदोषौ। केवलं जातौ चेत्शब्देन जातिमात्रस्योपस्थित्या व्यक्तिबोध: स्वीक्रियते चेदानन्तव्यभिचारदोषौ। केवलं जातौ चेत्शब्देन जातिमात्रस्योपस्थित्या व्यक्तिबोध: न जायते शब्देन। जातौ शक्तिं स्वीकृत्य यदि आक्षेपेण व्यक्तिबोध: स्वीक्रियते, तदा शाब्दबोध: न तस्यान्वय:। यत: **शाब्दी हि आकाङ्क्षा शब्देनैव पूर्यते** इति नयेन शब्दशक्ता योऽर्थ: लभ्यते, तस्यैव शाब्दबोधे अन्वयो जायते। आक्षेपलभ्यो योऽर्थ:, शब्दबोधे न तस्यान्वय: कर्तु शक्यते। यथा चोच्यते **काव्यप्रकाशस्य काव्यप्रदीपटीकारेण गोविन्दठक्कुरेण-** नैयायिकादयहतु - व्यक्तिमात्रं शक्यम्, न वा जातिमात्रम्। आद्ये, आनन्त्याद् व्यभिचाराच्च। अन्त्ये व्यक्तिप्रतीत्यभावप्रसङ्गात्। न चाक्षेपाद् व्यक्तिप्रतीतिरिति वाच्यम्। तथा सति वृत्त्यनुपस्थितत्वेन शाब्दबोधविषयत्वानुपपत्ति:। तस्माद्विशिष्ट एव संकेत:। न चानन्त्यादशक्यता व्यभिचारो वा। गोत्वादिसामान्यलक्षणया सर्वव्यक्तीनामुपस्थितौ सर्वत्र संकेतग्रहसौकर्यात्, इत्यातिष्ठन्ते।।'[११]

काव्यप्रकाशस्य सर्वप्रथम: टीकाकार आचार्यमाणिक्यचन्द्रोऽपि निगगति सङ्केतटीकायाम्- 'जाते: अर्थक्रियाकारित्वाभावात् विफल: संकेत:, व्यक्तेस्तु अर्थक्रियाकारित्वेऽपि आनन्त्यव्यभिचाराभ्यां न संकेत: कर्तु शक्यते इति जातिमती व्यक्ति: शब्दार्थ: इति वैशेषिकादय:।'[१२] सोमेश्वभट्टेनापि उक्तम्-जातेरर्थक्रियायामनुपयोगाद् विफल: संकेत:, यदाह-न हि जातिर्दाहपाकादौ उपयुज्यत इति। व्यक्तेस्त्वर्थक्रियाकारित्वेऽपि आनन्त्यव्यभिचाराभ्यां न संकेत: कर्तु शक्यत

इति जात्युपहिता व्यक्ति: शब्दार्थ:' इति वैशेषिका:।[१३]

व्यक्ताकृतिजातयस्तु पदार्थ: इति न्यायशास्त्रीयसिद्धान्त:।[१४] तद्वान् इत्युक्ते जातिमती व्यक्ति:। अर्थात् जातिविशिष्टव्यक्तावेव संकेतग्रह: स्वीकर्तव्य:' इति नैयायिकमतम्। तत्र 'कैशिचत्' इत्यनेन प्रतीयते यत्मतमिदं नाङ्गीकरोति मम्मटाचार्य:। अतीऽत्र न्यायशास्त्रीयसिद्धान्तेन सह साहित्यशास्त्रस्य प्रतितन्त्रमिति वक्तु शक्यते।

उपर्युक्तेषु चतुर्षु मतेषु मम्मटाचार्यस्याभिमतं किमस्ति, इत्यत्र स्वयमाचार्य: स्पष्टरूपेण न किमपि निर्दिशति । परं टीकाकारै: तत्र वैयाकरणमतमेव मम्मटाचार्यस्याभिष्टमित्युक्तम्। यथा च कथयति वामनाचार्यझलकीकर: काव्यप्रकाशस्य बालबोधिनीटीकायाम्। 'वयं तु इत्थं प्रतीम:। महाभाष्यकारोक्त पक्ष एव ग्रन्थकृदभिप्रेत:। अतएव प्रथमोल्लासे-'बुधैर्वैयाकरणै: इत्यादिना ततस्तन्मतानुसारिभिरन्यैरपि' इत्यन्तेन ग्रन्थे, वैयाकरणमतानुसारित्वमालङ्कारिकाणं ग्रन्थकृता प्रतिपादितम्। अतएव च मम्मट:शब्दव्यापारविचाराख्ये स्वकृतग्रन्थान्तरेऽपि जात्यादिरिति वैयाकरणपक्षमेव युक्तिप्रयुक्तिभि: संस्भाप्य जातिरेवेति मीमांसकपक्षमाशङ्क्य खण्डितवनिति।[१५]

पर तत्र नरसिहंमनीषाया 'अत्र इति महाभाष्यकार:, 'इत्यन्ये' 'इति कैश्चिद्' इत्यादिभि: पदै: सर्वस्मिन्नपि पक्षेऽस्वरसोद्भावनम्। न्यायादिमतेऽपि जात्यादे:शक्तिविषयत्वे गौरवम्। तस्माद् व्यक्तिपक्ष एव क्षोदक्षम:' इति नरसिहंठक्कुर: अतएव च विश्वनाथाचार्येण- संकेतो गृह्यते जातौ गुणद्रव्यक्रियासु च। एष्वेव हि व्याक्तेरुपाधिषु संकेतो गृह्यते, न व्यक्तौ।

लक्षणाव्यापारनिरूपणप्रसङ्गे न्यायशास्त्रीयाप्रकिया यथा-न्यायदर्शने- **सहचरणस्थानतादर्थ्यवृत्त-मान-धारण-सामीप्य-योग-साधनाधिपत्येभ्यो ब्राह्मणमञ्च कटराजसक्तुचन्दनगङ्गाशकटान्नपुरुषेषु अतद्भावेऽपि तद्वदुपचार:।**[१८] इति सूत्रेण लक्षणाविषये या प्रकिया निर्दिश्यते साहित्यशास्त्रे सा प्रक्रिया प्रकारान्तरेण उपयुज्यते। **मम्मटाचार्येण-**न्यायदर्शनोक्तानि उपचारनिमित्तानि स्वकीये काव्यप्रकाशो लक्षणाप्रकारणे परिगृहीतानीति कथयति **काव्याप्रकाशस्य सङ्केतटीकाकार : माणिक्यचन्द्र:-**

'यष्टी: प्रवेशये' ति यष्टित्वारोपो ब्राह्मणे साहचर्यात्। 'मञ्चा: क्रोशन्ती' ति मञ्चत्वारोपो बालेषु तात्स्थात्। 'वीरणेष्वास्ते' इति कटेषु वीरणत्वारोप: तादर्थ्यात्। 'अयं राजा यम:' इति राज्ञि यमत्वारोप: वृत्तात् । 'प्रस्थु: सक्तु:' इति सक्तौ प्रस्थत्वारोप: तन्मानकत्वात्।'चन्दनं तुला' इति चन्दने तुलात्वारोप: तद्धार्यत्वात्'गङ्गायां घोष:' इति गङ्गाया तीरघर्माघारत्वारोप: तत्सामीत्यात् ।'कृष्ण: शकट:' इति शकटे तद्धर्मकृष्णात्वारोप: कृष्णगुणयोगात्। 'अन्नं प्राणा:' इति अन्नेषु प्राणात्वारोप: प्रणासाघनत्वात्। 'अयं कुलस्य राजा' इति पुरुषे राजत्वारोप: कुलाधिपत्यात् इति।

तत्र च निरूपयति काव्यप्रकाशकार:'उभयरूण चेयं शुद्धा उपचारेमिश्रितत्वात्। भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा। गौणौ शुद्धौ च विज्ञेयौ। इमौ आरोणध्यवसानरूपौ सादृश्यहेतू

भेदौ 'गौर्वाहीक:' इत्यत्र 'गौरयम्' इत्यत्र च 'आयुर्घृतम्''आयुरेवेदम्'। इत्यादौ च सादृश्यादन्यत् कार्यकारणभावादि सम्बन्धान्तरम्। अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीति:, सर्वथैवाभेदावगमश्च प्रयोजनम्। शुद्धभेदयोस्त्वन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि क्वचित् तादर्थ्यादुपचार:यथा इन्द्रर्था स्थूणा 'इन्द्र:' क्वचित् स्वस्वामिभावत् ,यथा राजकीय: पुरुषो 'राजा'। क्वचिदवयवावयविभावात्, यथा अग्रहस्त इत्यत्राग्रामात्रेऽन्वये 'इस्त:'। क्वचित् तात्कर्म्यात् , यथा- अतक्षा- 'तक्षा'।[२०] सादृश्याख्यसम्बन्धेन प्रवृत्ति: उपचार:। अत्यन्तं पृथग्भूतयो: सादृश्यातिशयमहिम्ना भेदेप्रतीतिस्थगनं उपचार:। अत्र समानतन्त्रेण प्रक्रिया स्वीक्रियते।

अनेकेषामलङ्काराणं विकासक्रमेऽनुमानस्य योगो दरीदृश्यते। अनुमानालङ्कारोऽपि काव्यशास्त्रविधायिभि: परिभाषित: हेतुकाव्यलिङ्गादीनामलङ्काराणामुद्भावनेऽनुमानस्याश्रय: काव्यालङ्कारलक्ष्मविधायिभिर्मनीषिभि: स्वीकृत:। अप्पयदीक्षितादयस्तु प्रत्यक्षादिप्रमाणान्यप्यलङ्काररूपेण स्वीकृतवन्त:।

रसनिष्पत्तिव्याख्यामप्यनुमानस्याश्रय: भट्टशङ्कुकोन रससूत्रव्याख्याकारेण गृहीत: 'विभावानुभावव्यभिचारिसंयोगाद रसनिष्पत्ति' रिति भरतरससूत्रस्य व्याख्या भट्टशङ्ककेन अनुमानमेवाश्रित्य प्रस्तुता, अपि च स्थापित अनुमितिवाद:। रसपदार्थ: अनुमेय: इति तस्य पक्ष:। चित्रनुरगाहिन्यायेन रसोऽनुमीयते इति मतं भट्टशङ्ककस्य यद्यपि खण्डितं: सर्वैराचार्यै: तथापि किमपि नवत्वं तु तत्र विद्यते एव।

गौतमीये न्यायशास्त्रे यथैव अनृत-व्याघातपुनरूक्तादयो दोषा: वर्णिता सन्ति तथैव ते अलङ्कारशास्त्रेऽपि परिगृहीता:। प्रमाणत्वेत तत्र काव्यालङ्कार-काव्यादर्श- काव्यालङ्कारसारसंग्रह-काव्यालङ्कारसूत्रवृत्ति -काव्यालङ्कार-सरस्वतीकण्ठाभरण- अलङ्कारसर्वस्व-काव्यप्रकाशसाहित्यदर्पणकृवलयानन्द- अलङ्कारकौस्तुभादिसाहित्यशास्त्रीयग्रन्थेषु प्रतिपादितं दीषप्रकरणमलङ्कारप्रकरणञ्च द्रष्टुं शक्यते। न्यायशास्त्रे यत् शब्दार्थविषयक पुनरुक्तम् [२१] तदलङ्कारशास्त्रेऽपि सर्वत्र तद्दोषविचारे परिदृश्यते। इदमेव मम्मटाचार्यस्य अनवीकृतत्वम्। न्यायदर्शनस्य न्युनाधिकदोषौ अलङ्कारशास्त्रे न्यूनपदत्वम् अधिकपदत्वञ्च दोषौ। तत्र वात्सायनभाष्ये यानि निग्रहस्थानानि प्रतिपादितानि सन्ति तानि काव्यदोषत्वेन उपात्ता: सन्ति। किं बहुना काव्यशास्त्रीय-दोषविचारे न्यायर्दानसिद्धान्तस्यानुसरणं स्पष्टमेव परिलक्ष्यते।

रसादिध्वनेर्व्यङ्ग्यत्व खण्डयता महिमभट्टेन व्यक्तिविवेकग्रन्थे न्यायवैशेषिकयोरेवप्रक्रिया आत्मासात्कृता। तया प्रक्रियया एव महिमभट्टेन ध्वने: सर्वेषां भेदानामन्तर्भाव अनुमानप्रमाणे एव क्रियते। तत्र क्वचिन् समानतन्त्रेण क्वचिच्च प्रतितन्त्रेण न्यायशास्त्रीयसिद्धान्तस्त (प्रक्रियाणामुपयोग:तत्तद्प्रकरणेषु क्रियते साहित्यशास्त्रप्रणेतृभि:।

अलङ्कारसर्वस्वग्रन्थस्य विमर्शिनीटीकायां जयरथेन ध्वनिविषयिण्या: या: विप्रतिपत्तय: संगृहीता: यथा- तात्पर्यशक्तिरभिधा लक्षणानुमिती द्विधा।

अर्थापत्तिः क्वचित् तन्त्रं समासोक्त्याद्यलंकृतिः।।
रसस्य कार्यता भोगो व्यापारान्तर-बाधनम्।
द्वादशेत्थं ध्वनेरस्य स्थिताः विप्रतिपत्तयः।।२२ इति।

ताः सर्वाः विप्रतिपत्तयः शास्त्रान्तरेषु प्रतिपादिताः सन्ति। अतएव अलङ्कारशास्त्रप्रणेतारः आरम्भादेव काव्यनिर्माणे असाधारणतया सकलाः कलाः निखिलश्च विद्याः, साधनीभूताः, सन्तीति प्रतिपादयन्ति। कविभिश्व ताः सर्वाः विद्याः, तानि सर्वाणि शास्त्राणि अवश्यमेव ज्ञातव्यनि इति कथयन्ति। तथा हि–

**न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।**
**नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते।।**
**शब्दाश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः।**
**लोको युक्तिः कलाशचेति मन्तव्याः काव्यज्ञैरमी।।** [२४]
**न स शब्दो न तद्वाच्यं न स न्यायो न सा कला।**
**जायते यन्न काव्याङ्गमहो भारो महान्कवेः।।**[२५]

इति प्रतिपादयन्ति आचार्याः। एवमेव कथयति आचार्यदण्डी-

**नैसर्गिकी प्रतिभा श्रुतं च बहु निर्मलम्।**
**अमन्दश्चभियोगोऽसाः कारणं काव्यसम्पदः।।**[२६] **इति।**
**लोको विद्या प्रकीर्णञ्च काव्याङ्गानि** इति वामनाचार्यः। [२७] मम्मटभट्टस्तु
**शक्तिर्निपुणता-लोकशास्त्रकाव्याद्यवेक्षणात्।**
**काव्यज्ञशिक्षायाभ्यास इति हेतुस्तदुद्भवे।।**[२८] इति प्रतिपादयति।

एवमेव प्राचीनैर्वाचीनैरलङ्कारशास्त्रप्रणेतृभिः स्व-स्व साहित्यशास्त्रीयग्रन्थेषु प्रतिपाद्यते। एवं हि यथा काव्यनिर्माणे सकलशास्त्रादिज्ञानमपेक्षितम्, तथैव काव्यशास्त्रप्रणयने शास्त्रान्तरज्ञानमपेक्षितमेव। अतएव काव्यशास्त्रप्रणेतार आवश्यकतानुसारं शास्त्रान्तरक्रियाया उपयोगं कुर्वन्ति। एवमेव अन्यान्यपि बहूति न्यायशास्त्रान्तरप्रक्रियानुसारीणि प्रकरणानि काव्यशास्त्रस्य विशालक्षेत्रे विलसन्ति। विस्तरभयाद् तेषां सर्वेषां विवेचनमत्र न क्रियते। इति।

**पादटीका**

१. हितोपदेश
२. वक्रोक्तिजीवितम्-प्रथमोन्मेष
३. काव्यमीमांसा-द्वितीयोऽध्यायः
४. काव्यालङ्कारसूत्राणि-१-१,सू.सं.-१.२.३
५. नट्यशास्त्रम्-१-१७
६. काव्यमीमांसा-द्वितीयोऽध्यायः

७. काव्यमीमांसा-द्वितीयोऽध्याय:
८. काव्यप्रकाश:-द्वितीयोल्लास:, सू.सं-१०
९. काव्यप्रकाश:-द्वितीयोल्लास:, वृत्तित:-पृ.४५
१०. काव्यप्रकाश:-द्वितीयोल्लास:, वृत्तित: पृ.४९
११. काव्यप्रदीका-२/पृ.२५
१२. संकेतटीका-२/पृ. ८०
१३. काव्यादर्श संकेतटीका-२/पृ.१५
१४. न्यायसूत्रम् २/ २/ ६८
१५. बालबोधिनीटीका-२/पृ.-३९
१६. बालबोधिनीटीका-२/पृ.३९
१७. साहित्यदर्पण-२/४
१८. गौतमन्यायसूत्रे-२/ २/ ६४
१९. सकेतटीका-२ पृ–११२
२०. काव्यप्रकाश:- २-सू.सं-१६, वृत्तित:-पृ.-६२-६६
२१. न्यायदर्शनम्-२/१/५७
२२. विमर्शिनीटिका -पृ. ९
२३. नाट्यशास्त्रम् १-११६
२४. काव्यालङ्कार: १/९
२५. काव्यालङ्कार:, ५-४
२६. काव्यादर्श: १/१०३
२७. काव्यालङ्कारसूत्राणि - १/ ३/ १
२८. काव्यप्रकाश: - १/ ३

वरिष्ठ-सहायकाचार्य:
साहित्यविभाग:,
श्री.ला.ब.शा.रा.सं. विद्यापीठम्
नवदेहली - १६

# संस्कृतकाव्येषु आलेख्यम्

डा.भारतभूषणरथः

## किं नाम आलेख्यम्

साहित्यं मानवजीवने अङ्गाङ्गीभावेन जडितम्। साहित्यं विहाय न कोऽपि जीवति। जीवने कथंचिदपि साहित्यरससागरे मानवः निमज्जति एव। तदर्थम् उक्तं भर्तृहरिणा -

साहित्यसङ्गीतकलाविहीनः
साक्षात्पशुः पुच्छविषाणहीनः।
तृणं न खादन्नपि जीवमान-
स्तद्भागधेयं परमं पशूनाम्।।[१]

साहित्यं सङ्गीतं-वाद्यं-नृत्यं-आलेख्यं-चित्रमित्यादीनां चतुःषष्टिकलानां सुसमाहारेण बलिष्ठं वर्तते। एतासु चतुःषष्टीकलासु मानवाः नितरामानन्दमनुभवन्तेव। अतः महाकवयः स्व स्व महाकाव्येषु एताषां चतुःषष्टिकलानां प्रयोगे सर्वथा सिद्धाः भवन्ति। संगीत-वाद्य-नृत्यादयः यथा चित्तमाह्लादयन्ति आलेख्यमपि तथैव हृद्कन्दरे प्रविश्य जनमानसं परितोषयति। "आ" उपसर्ग पूर्वकात् "लिख्" धातोः "ण्यत्" प्रत्यये निष्पन्नोऽयम् आलेख्यमिति शब्दः। आलेख्यं नाम चित्रकला। यतः "लिख्" धातोःप्रयोगः "रेखा" इत्यर्थेऽपि व्यवह्रियते। यथा - "लेखास्तु राजयः"। रलयोरेकत्वस्मरणात् "रेखा" अपि। "राजी रेखायां पङ्क्तौ च" इति हैमः।।[२] अपि च "रलयोरभेदः" इति भाष्यकाराः विवदन्ति। तत्र रेखाणां माध्यमेनैव चित्राणां सृष्टिः। तदर्थं काव्यालङ्कारसूत्रे वामनेन उक्तं यत् - "एतासु तिसृषु रेखास्विव चित्रं काव्यं प्रतिष्ठितम्।।"[३] रीतिसम्प्रदायस्य परमाचार्योऽयं वामनः रीतेः स्वरूपं रेखया सह तुलयति। अपि च चित्रं काव्येन सह अतुलयत्। यथा रेखाणां समाहारेण चित्रं सुन्दरं प्रतिभाति तथैव रीतयः काव्यवैभवं विमण्डयन्तीति तस्य मतम्। अपि च काव्यालङ्कारसूत्रस्य टीकाकारः रत्नेश्वरः कथयति यत् -

यथा चित्रस्य लेखा अङ्गप्रत्यङ्गलावण्योन्मीलनक्षमा तथा रीतिरिति।।[४]

चित्रं जनमानसे मनोरञ्जकत्वं तत्त्वं प्रतिपादयति येन दुःखितोऽपि मानवः सुखं लभते। धर्मार्थकाममोक्षार्थं च चित्रमिति प्रमाणयति विष्णुधर्मोत्तरपुराणम्। यथा -

कलानां प्रवरं चित्रं धर्मकामार्थमोक्षदम्।
माङ्गल्यं प्रथमं चेतद्गृहे यत्र प्रतिष्ठितम्।।
यथा सुमेरुः प्रवरो नगानां यथाण्डजानां गरुडः प्रधानः।
यथा नराणां प्रवरः क्षितीशस्तथा कलानामिह चित्ररूपः।। [५]

शब्दकल्पद्रुमे आलेख्यस्य विश्लेषणम् एवं विहितं यत् - क्लीवलिङ्गे आङ् उपसर्गपूर्वकात् लिख् धातोः ण्यत् प्रत्यये आलेख्यमिति। यस्य अर्थः चित्रम्। इति हेमचन्द्रः। यथा माघे - इति संरम्भिणो

वाणीर्बलस्यालेख्यदेवता:। माघे - २.६७।। तथा च - अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा। निशीथदीपा: सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव।। रघु-३.१५।।[६] चित्रादौ लेख्यदेवादिप्रतिविम्बे। चित्रे इति।। **वाचस्पत्यम्**।। आ उपसर्गपूर्वकात् लिख् धातो: ण्यत् प्रत्यये चित्रकारी,चित्रमिति।।[७]

**शास्त्रेषु आलेख्यस्य प्रासङ्गिकता**

एवम् आलेख्यशब्दस्य चित्रमिति अर्थं प्रतिपादनार्थं कोषवचनम् अपर्य्याप्तं वर्त्तते। अधुना साहित्यशास्त्रे तथा च शास्त्रान्तरेषु अस्य विचार: किञ्चिदत्र प्रस्तूयते। तत्र चतुषष्टिकलासु चित्रकला सर्वोत्कृष्टमिति समराङ्गणसूत्रधारे। यथा -

चित्रं हि सर्वशिल्पानां मुखं लोकस्य च प्रियम्।।[८]

आलेख्यस्य प्रशंसायाम् अपराजितपृच्छायां विस्तृतवर्णनं वर्तते। विश्वं चित्रात्मकमिति कथयन् लिखति यत् -

चित्रमूलोद्भवं सर्वं जगत्स्थावरजङ्गमम्।
पश्यन्ति भावरूपैश्च जले चन्द्रमसं यथा।
तद्वच्चित्रमयं सर्वं पश्यन्ति ब्रह्मवादिन:।।
कूपो जले जलं कूपे विधिपर्य्यायतस्तथा।
तद्वच्चित्रमयं विश्वं चित्रं विश्वे तथैव च।।[९]

विष्णुधर्मोत्तरपुराणमपि तदेव समर्थनपूर्वकं कथयति यत् -

यथा नृत्ते तथा चित्रे त्रैलोक्यस्यानुकृति: स्मृता।।[१०]

चित्रं वहुप्रकारकम्। पट्टचित्रं-भावचित्रं-रसचित्रमिति चित्रस्य वहुविधं दृश्यं द्रष्टुं शक्यते। स्थिते सति चित्रस्य वहुविधत्वं भाव-रसचित्रयो: वर्णनं काव्ये बहुधा द्रष्टुं श्क्यते। यद्यपि पट्टचित्रादीनां वर्णनमपि काव्ये शोभन्ते परन्तु भावचित्रमत्यधिकं द्रष्टुं शक्यते। तत्र किं नाम भावचित्रमिति विष्णुधर्मोत्तरपुराणं सूचयति यत् -

शृङ्गारादिरसो यत्र दर्शनादेव गम्यते।
भावचित्रं तदाख्यातं चित्रकौतुककारकम्।।[११]

एवं च रसचित्रस्य विषये सूचयति यत् -

सद्रवैर्वर्णकैर्लेख्यं रसचित्रं विचक्षणै:।।[१२]

अत: काव्यशास्त्रेतिहासे कविशिरोमणय:चित्रं कथंचिदपि संयोजयन्ति। येन काव्यशोभा द्विगुणीता प्रतिभाति।

**कालिदाससाहित्ये आलेख्यम्**

कालिदास: विश्वसाहित्ये मुकुटायमान: कविपुङ्गव:। यस्य प्रत्यहं नामस्मरणं कविकुलस्य परमकर्त्तव्यम्। समाजस्य समस्ताङ्गं स्पृशति कालिदास: स्व काव्यरत्नेषु। नवरसाणां समाहार:,

गुणत्रयाणां विचार:, समस्तालङ्काराणां सुष्ठुविन्यास:, छन्दसां सुललितप्रयोग: तथा च समस्तसाहित्यिकाङ्गानां यथास्थानं प्रयोगेण कालिदासग्रन्था: विद्वत्समाजे सर्वोच्चस्थानमधिकुर्वन्ति। चतु:षष्ठिकलानां सूक्ष्मातिसूक्ष्मविचार: कालिदासेन यथा कृतं न केनापि। अत: सर्वगुणसम्पन्नानां कालिदासकाव्यानां प्रशंसायामुच्यते -

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदास:।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव।।

महाकवे: कालिदासस्य यद्यपि अनेके कृतय: वर्त्तन्ते तथापि सप्त कृतय: विदुषां जिह्वाग्रभूषणरूपं धारयन्ति। तेषु ग्रन्थरत्नेषु त्रय: नाट्यग्रन्था: अभिज्ञानशाकुन्तम्, विक्रमोर्वशीयम्, मालविकाग्निमित्रमिति। काव्यद्वयं रघुवंशं कुमारसंभवञ्चेति। गीतिकाव्यद्वयं मेघदूतम् ऋतुसंहारञ्चेति। कविकुलशिरोमणिना कालिदासेन समस्त काव्येषु वहुत्र आलेख्यस्य प्रयोग: कृत:। तत्र रघुवंशे द्वितीयसर्गे रघो: जन्मप्रसङ्गे आलेख्यस्य साक्षात् प्रयोग: कृत:। यथा -

अरिष्टशय्यां परितो विसारिणा सुजन्मनस्तस्य निजेन तेजसा।
निशीथदीपा: सहसा हतत्विषो बभूवुरालेख्यसमर्पिता इव।।[१३]

अत्र आलेख्यसमर्पिताश्चित्रार्पिता इव बभूवु: इत्यर्थ:। एवं च चतुर्दशसर्गे श्रीराम: पूजागृहे स्व पितु: दशरथस्य चित्रं दृष्ट्वा क्रन्दति। तदा आलेखस्य प्रयोग: यथा -

वेश्मानि राम: परिबर्हवन्ति विश्राण्य सौहार्दनिधि: सुहृद्भ्य:।
बाष्पायमाणो बलिमन्निकेतमालेख्यशेषस्य पितुर्विवेश।।[१४]

कुमारसम्भवे यथा -

उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवाऽरविन्दम्।[१५]

मेघदूते यथा -

त्वामालिख्य प्रणयकुपितां धातुरागै: शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्त:।।[१६]

अनेन प्रकारेण कालिदाससाहित्ये वहुत्र आलेख्यप्रयोग: द्रष्टुं शक्यते। कालिदासीयकाव्यमनुसृत्य तत्परवर्ती कवय: स्व काव्येषु आलेख्यवर्णनं कृतमिति पाठकै: अनुभूयन्ते।

**बृहत्त्रय्याम् आलेख्यम्**

संस्कृतसाहित्ये पञ्चमहाकाव्यानि सुप्रसिद्धानि सन्ति। यथा - रघुवंशम्, कुमारसम्भवम्, किरातार्जुनीयम्, शिशुपालवधम्, नैषधीयचरितञ्च। एतेषु पञ्चमहाकाव्येषु किरातार्जुनीयम्, शिशुपालवधम्, नैषधीयचरितञ्च बृहत्त्रयीनाम्ना साहित्यजगति व्यवह्रीयन्ते। बृहत्त्रय्या: अनुशीलनेन ज्ञायते यत् भारवे: स्थानं प्रथममेव। भारवे: किरातार्जुनीयं महाकाव्यं सुप्रसिद्धं वर्तते। अस्मिन्

महाकाव्ये अष्टादशसर्गाः सन्ति। अत्र महाभारतस्य वनपर्वणि वर्णितस्य अर्जुनस्य पाशुपतास्त्रप्राप्तिवृत्तान्तं वर्तते। स्वल्पशब्दप्रयोगेण विपुलार्थज्ञापनं भारवेः विशेषता। अतः उच्यते- भारवेरर्थगौरवम्।।

शिशुपालवधमहाकाव्यस्य रचयिता महाकविः माघः। विंशसर्गात्मके महाकाव्येऽस्मिन् भगवता श्रीकृष्णेन कथं चेदिनरेशशिशुपालस्य कपटवधः कृतः तदालोचितम्। महाकविकालिदासभारविदण्डिनामेकायतनीभूतं माघकाव्यम्। अतः अस्य काव्यकलायाः प्रशंसायां वर्त्तते सूक्तिः -

माघे सन्ति त्रयो गुणाः।

श्रीहर्षस्य नैषधीयचरितं संस्कृतसाहित्ये अद्वितीयमहाकाव्यम्। अत्र द्वाविंशतिः सर्गाः, यत्र राज्ञः नलस्य उदात्तचरित्रवर्णनं दमयन्तीविवाहप्रकारश्च विद्येते। श्रीहर्षस्य दार्शनिकतत्त्वानां विचारः तथा विविधरसाणां सन्निवेशनं काव्यशोभां वर्धयति। अतः उच्यते -

नैषधं विद्वदौषधम्।।

इदानीं तत्तत् काव्येषु कथम् आलेख्यं प्रयुक्तमिति प्रस्तुयते।

**किरातार्जुनीये आलेख्यम्**

संक्रान्तचन्दनरसाहितवर्णभेदं
विछिन्नभूषणमणिप्रकरांशुचित्रम्।
वद्धोर्मि नाकवनितापरिभुक्तमुक्तं
सिन्धोर्बभार सलिलं शयनीयलक्ष्मीम्।।[१७]

अस्मिन् श्लोके गङ्गानद्याः जलस्य शोभा कविः चित्रमाध्यमेनैव सूचयति। एवं काव्येस्मिन् आलेख्यमितोपि वहुत्र द्रष्टुं शक्यते।

**शिशुपालवधे आलेख्यम्**

द्रुतशातकौम्भनिभमंशुमतो वपुरर्द्धमग्नवपुषः पयसि।
व्यरुचद्विरिञ्चिनखभिन्नबृहज्जगदण्डकैकतरखण्डमिव।। [१८]

सन्ध्यासमये सूर्यः अस्ताचलशिखरेषु तिष्ठति। अनेन ज्ञायते विनाशसमयेऽपि सज्जन्नाः उच्चस्तरे एव भवेयुः। वस्तुतः संध्यावर्णनं चित्रकलायाः एकम् उत्कृष्टम् उदाहरणम्। एवं च -

चित्राभिरस्योपरि मौलिभाजां भाभिर्मणीनामनणीयसीभिः।
अनेकधातुच्छुरिताश्मराशेर्गोवर्धनस्याकृतिरन्वकारि।। [१९]

श्लोकेऽस्मिन् रत्नमण्डितस्य गोवर्धनस्य शोभा चित्रिता। तथा च-

स इन्द्रनीलस्थलनीलमूर्ती रराज कर्पूरपिशङ्गवासाः।
विसृत्वरैरम्बुरुहां रजोभिर्यमस्वसुश्चित्र इवोदभारः।।[२०]

अत्र भगवतः श्रीकृष्णस्य शरीराकृतिवर्णनं कविना कृतम्। इन्द्रनीलमणिसमानं श्यामशरीरं

कर्पूरवृक्षसमानः पीतवस्त्रधारी विकसमानकमलपरागचित्रितयमुनाजलरसेन सह समानतया शोभते। अनेन प्रकारेण श्रीकृष्णस्य शरीरशोभां चित्रयति कविः।

**नैषधीयचरिते चित्रम्**

द्विकुण्डली वृत्तसमाप्तिलिप्याः
करांगुली काञ्चनलेखनीनाम्।
कैश्यं मसीनां स्मितभाः कठिन्याः
काये यदीये निरमायि सारैः।।[२१]

श्लोकेऽस्मिन् सरस्वत्याः सौन्दर्यवर्णनं कुर्वन् तस्याः कुण्डलीद्वयं वृत्तसमाप्तिसूचकः विसर्गः, सुवर्णलेखन्यः तस्य अङ्गुल्यः, लेखन्यां विद्यमानमषी स्वकेशाः मसीति कविः वर्णयति। अत्र लेखन्यादिसहिता सरस्वती सुष्ठु अभिवर्णिता। एवं चित्रकलायाः सम्पूर्णं चित्रम् अस्माभिः द्रष्टुं शक्यते।

पुरे पथिद्वारगृहाणि तत्र
चित्रीकृतान्युत्सववाञ्छयैव।
नभोऽपि किर्मीरमकारि तेषां
महीभुजामाभरणप्रभाभिः।। [२२]

कुण्डिनीपुर्यां विवाहोत्सवाभिलाषेण पन्थानः द्वाराणि गृहाणि च अतीव रमणीयतया चित्रितानि। तथा च तत्र अभ्यागतानां सामन्तराज्ञाम् अलंकृताभूषणप्रभाभिः आकाशमार्गोऽपि चित्रविचित्रितः सञ्जातः। इतः तदानीन्तनराजानः कथं चित्रकलायाः सम्मानं दत्तवन्तः इति ज्ञान्तुं शक्यते। काव्ये अस्य सुष्ठु विनियोजनं कृत्वा काव्यमहत्त्वं द्विगुणीतं भवति। तथा च -

विरहपाण्डिमरागतमोमषीशितिमतन्निजपीतिमवर्णकैः।
दश दिशः खलु तद्दृगकल्पयल्लिपिकरी नलरूपकचित्रिताः।। [२३]

वियोगेन पीडिता दमयन्ती पाण्डुरा सञ्जाता। अतः दिशः भित्तिरूपेण मत्वा स्वप्रियस्य नलस्य चित्रं चित्रितवती दमयन्ति।

ते तत्र भैम्याश्चरितानि चित्रे चित्राणि पौरैः पुरि लेखितानि।
निरीक्ष्य निन्युर्दिवसं निशाञ्च तत्स्वप्नसम्भोगकलाविलासैः।।[२४]

अत्र पुरवासिना कृता चित्रकला काव्यवैभवेन द्रष्टुं शक्यते। एवं च -

पुष्पकाण्डजयडिण्डिमायितं यत्र गौतमकलत्रगामिनः।
पारदारिकविलाससाहसं देवभर्त्तुरुदट्टङ्किः भित्तिषु।। [२५]

श्लोकेऽस्मिन् गौतमकलत्रगामिनः देवभर्त्तुः पुष्पकाण्डजयडिण्डिमायितं परदारिकविलाससाहसम् आलेख्यमाध्यमेन भित्तिषु द्रष्टुं शक्यते। एवं प्रकारेण समस्तकाव्यवाङ्मयं आलेख्यप्रयोगेण काव्यचारुत्वं परिवर्द्धयन्ति। वस्तुतः आलेख्यप्रयोगेण अर्थावगमनम् शीघ्रं रुचिकरञ्च भवतीति नास्ति सन्देहः।

**सङ्केताक्षरसूची**

१. भर्तृहरिनीतिशतकम् - १२
२. अमरकोष: - २.वनौषधीवर्ग:.४
३. काव्यालङ्कारसूत्रम् - १
४. काव्यालङ्कारसूत्रम् - रत्नेश्वरटीका।
५. विष्णुधर्मोत्तरपुराणम् - ४३-३८,३९
६. शब्दकल्पद्रुम:
७. संस्कृत-हिन्दीशब्दकोश: - वामनशिवरामआप्टे।
८. समराङ्गणसूत्रधार: - ५१.१
९. अपराजितपृच्छा
१०. विष्णुधर्मोत्तरपुराणम् - ३५.६
११. विष्णुधर्मोत्तरपुराणम् - अध्याय:- ४१
१२. विष्णुधर्मोत्तरपुराणम् - अध्याय:- ४१
१३. रघुवंशम् - ३.१५
१४. रघुवंशम् - १४.१५
१५. कुमारसम्भवम् - १.३२
१६. मेघदूतम् - २.४२
१७. किरातार्जुनीयम् - ८.५७
१८. शिशुपालवधम् - ९.९
१९. शिशुपालवधम् - ३.४
२०. शिशुपालवधम् - ३.११
२१. नैषधीयचरितम् - १०.८७
२२. नैषधीयचरितम् - १०.३१
२३. नैषधीयचरितम् - ४.१५
२४. नैषधीयचरितम् - १०.३५
२५. नैषधीयचरितम् - १८.२०

**सहायकग्रन्थसूची**

१. अमरकोष: - चौखम्बाविद्याभवनम् - वाराणसी - २००८
२. अपराजितपृच्छा - सरस्वतीभवन्थालय: - तञ्जौर:
३. काव्यालङ्कारसूत्रम् - चोखम्बासंस्कृतसंस्थानम् - वाराणसी

४. किरातार्जुनीयम् - डा.कान्ताभाटिआ, डा.अमलधारी सिंह - भारतीयविद्याप्रकाशनम् - वाराणसी - २००७
५. कुमारसम्भवम् - प्रद्युम्नपाण्डे - २०१०
६. कालिदाससाहित्य एवं कामकला - प्रो.सुषमाकुलश्रेष्ठः, प्रो. इला घोषः - ईष्टर्न बुक् लिंकर्स - दिल्ली - २००८
७. नैषधीयचरितम् -चन्द्रिकाव्याख्या - देवर्षिसनाढ्यशास्त्री - कृष्णदास अकादमी - वाराणसी - २००३
८. मेघदूतम् - गोस्वामीप्रह्लाद गिरिः - भारतीयविद्याप्रकाशनम् - दिल्ली१९९२
९. रघुवंशम् - डा.कृष्णमणि त्रिपाठी - चौखम्बा सुरभारती प्रकाशनम् - वाराणसी - २००८
१०. विष्णुधर्मोत्तरपुराणम् - श्री वेङ्कटेश्वरप्रेससंस्करणम्
११. संस्कृत-हिन्दीशब्दकोशः - वामनशिवरामआप्टे- अशोकप्रकाशनम् - २०१२
१२. समराङ्गणसूत्रधारः -
१३. शिशुपालवधम् - रामचन्द्रकाक, हरभट्टशास्त्री - भारतीय विद्या प्रकाशनम् - १९९०

**सहाचार्यः,**
**राष्ट्रियसंस्कृतविद्यापीठम्, तिरुपति**

## काव्ये रसदोषा:

**ड. चन्द्रकान्त पण्डा**

वाक्यं रसात्मकं काव्यमिति लक्षणानुसारं काव्ये यदि प्रतिवाक्यं रसासिक्तं भवति तदा तत्काव्यं सहृदयानां हृदयमाकर्षति। अत: काव्यमेवानन्दानुभूतिसाधनम्। अनन्दानुभूतिस्तु रसास्वादमुला। वस्तुतो रसास्वादनादेवानन्दप्राप्ति:। आनन्दस्य महत्वं काव्ये किदृशं प्रसङ्गेऽस्मिन् मम्मटाचार्य: कथयति—

सकलप्रयोजनमौलिभूतं समन्तरमेव रसास्वादसमुद्भूतं विगलितवेद्यान्तरमानन्दम्। (काव्य १-२)

साहित्यदर्पणे विश्वनाथाचार्य: रसस्वरुपप्रसङ्गे वर्णयति रसो ब्रह्मास्वादसहोदर: यथा —

वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदर:।

स्वाकारवदभिन्नत्वेनायमास्वाद्यते रस:। (सा. द. ३-२,३)

तैत्तिरीयोपनिषदि ''रसो वै स:, तमेव लब्ध्बानन्दी भवति जीव:'' (तै. २-७) इत्यत्र ब्रह्मणो रसयुपत्वं तदवाप्तौ चानन्दप्राप्तिरिति वर्ण्यते।

नाट्यशास्त्रेऽपि यदा भरताचार्यस्य रसलक्षणमायाति यथा- ''विभावानुभावव्यभिचारिभावसंयोगाद्रसनित्पत्ति:'' तदा रस इति क: पदार्थ:? इति प्रसङ्गे भरतेनोक्तम्- आस्वाद्यमानत्वाद्रस:। यथा हि नानाव्यञ्जनसंस्कृतमन्तं भुञ्जाना रसानास्वादयन्ति सहृदया: पुरुषा हर्षादींश्चाधिगच्छान्ति तथा नानाभावाभिनयव्यञ्जितान् वागङ्गसत्वोपेतान् स्थायिभावान् आस्वादयन्ति सुमनस: प्रेक्षका हर्षादीश्चाधिगञ्छन्ति। (नाट्य. ६-३७)

नाट्यशास्त्रे भरतेन यथार्थमेवोक्तम्- ''न हि रसाद् ऋते कश्चिदर्थ: प्रवर्तते'' (नाट्य. ६-३२)। अत्रार्थो नाम भाव:। न भावहीनो रस:, न च रसहीनो भाव:।एवं द्वावपि परस्परं भावयत:। रस:सवेषां भावानां मूलम्, यथा बीजं बृक्षपुस्पादे:।

रस्यते आस्वाद्यते इति रस:-व्युत्पत्यानुसारं सरसं वस्त्वदाद्रियते न तु रसहीनं वस्तु। जीवने यावद्रसस्यास्वादनं जायते तावदेव जीवनं नोचेत् मृतप्रायम्। एवंभूतस्य रसस्याभिवृद्धिक्षेत्रे ये बाधका भवन्ति त एव दोषा: कथ्यन्ते।

'रसापकर्षका द्रोषा:। इति विश्वनाथस्य काव्यदीषन्तक्षणो पञ्चविधदीषाणां वर्णनां साहित्यदर्पणे लभ्यते।

रसापकर्षका दोषास्ते पुन: पञ्चधा मता:।

पदे तदंशे वाक्येऽर्थ संभवन्ति रसेऽपि यत्।। (सा.द.७-१)

रसस्यापकर्ष: अर्थात् येन कारणेन रसस्य विच्छेदो भवति तत् कारणमेव दोष: कथ्यते। दूषयति कार्व्यामति द्रोष:। वस्तुत: पद-पदांश-वाक्य-अर्थ-रसादिभि: काव्यं दूषितं भवति यदैतेषां यथार्थरूपेणोपस्थापनं नैव भवति। अतो रसस्यापकर्षस्त्रिविधेन भवति यथा — (क) यत्र

रसास्वादस्याभावः। (ख) रसस्योत्कृष्टतायां विधातकाः। ग) रसास्वादने बिलम्बश्चेति। यत्र पद-पदांशदोषा रसस्यापकर्षे विघातका भवन्ति तेषां क्षेत्राणि विश्वनाथमतानुसारमेवं भवन्ति –

दुःश्रवत्रिविधाऽश्लीलाऽनुचितार्थाऽप्रयुक्तताः।
ग्राम्याऽप्रतीतसंदिग्धनेयार्थनिहतार्थताः।।
अवाचकत्वं विनष्टत्वं विरूद्धमतिकारिता।
अविष्टविधेयांशभावश्य पदवाक्ययोः।।
दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदे पदे
निरर्थकाऽसमर्थत्वे च्युतसंस्कारतां तथा।। (सां.द. ७-२,३,४)

यत्र वाक्यदोषा रसस्यापकर्षं कुर्वन्ति तेषां स्थलानि साहित्यदर्पणे निम्नोक्तप्रकारेण स्थिरीकृतानि सन्ति यथा-

वर्णानां प्रतिकूलत्वं लुप्ताऽऽहर्तावसर्गते।
अधिकन्युनकथितपदताहतवृत्तताः।।
परत्प्रकर्षता संधौ विश्लेषाऽऽश्लीलकष्टता।
अर्थान्तरैकपदता समाप्तपुनरात्तता।
अभवन्मतसंबन्धाऽक्रमाऽमतपरार्थताः।।
वाच्यस्यानभिधानं च भग्नप्रकमता तथा।
त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः।।
संकीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः।। (सा. द. ७-५, ६,७,८)

अर्थदोषा यत्र रसस्यापकर्षविधायका भवन्ति तेषां स्थलानि भवन्ति-

अपुष्टदुष्क्रमग्राम्यव्ह्रताऽश्लीलकष्टताः।
अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः।
संदिग्धपुनरूक्तत्वे ख्यातिविद्याविरूद्धते।
सांकाक्षता सहचरभिन्नतास्थानयुक्तता।
अविशेषे विशेषश्चानियमे नियमस्तथा।
तयोविपर्ययौ विध्यनुवादायुक्तते तथा।
निर्मुक्तपुरुक्तत्वमर्थदोषाः प्रकीर्तिताः (सा.द. ७-९,१०,११)

रसदोषः — काव्ये पञ्चविधदोषेषु रर्सोषः नितरां महत्वपूर्णमस्ति। रसस्य विन्यासो यदि सम्यक्तया रसदोषं प्रति ध्यानं न प्रदीयते तदा रसदोषेण काव्यमधमं काव्यं भवति। रसा नाम न केवलं शृङ्गारादयः, अपि तु स्थायिभावेन सह विभावानुभावव्यभिचारिभावाः सर्व एव रसशब्देनावबोध्यन्ते। सुतरामेतेषामुपस्थापनं यदि सम्यग् रूपण काव्ये भवति तदा रसदोषा नैव भविष्यन्ति। यानि खलु रसदोषस्य स्थलानि तानि साहित्यदर्पणे विश्वनाथेनैवमुलिखितानि —

रसस्याक्ति: स्वशब्देन स्थायिसंचारिणोरपि।।

परिपन्थिरसाङ्गस्य विभावादे: परिग्रह:।

आक्षेप: कल्पित: कृच्छादनुभावविभावयो:।।

अकाण्डे प्रथनच्छेदौ तथा दीप्ति: पुन: पुन:।

अङ्गिनोऽननुसन्धनमनङ्गस्य च कीर्तनम्।।

अतिविस्तृतिरंगस्य प्रकृतीनां विपर्यय:।

अर्थानौचित्यमन्यच्च दोषा रसगता मता:।। (सा. द. ७-१२,१३,१४,१५)

स्व शब्देन रसस्योक्ति: रसदोषो भवति यथा–

तामुद्वीक्ष्य कूरङ्गाक्षीं रसो न: कोऽप्यजायत।

चन्द्रमण्डलमालोक्य शृङ्गारे मग्नमन्तरम्।।

अत्र शृङ्गारे इति रसस्य स्वशब्देन कथनाद्रसदोष:। अत: कस्यापि रसशब्दस्य स्ववाचकपदेन काव्ये कथनमनुचितम्।

स्वशब्देन स्थायिभावस्योक्ति: रसदोषो यथा–

अजायत रतिस्तस्यास्त्वयि लोचनगोचरे''। अत्र 'रति:' इति स्थायिभावस्य स्वशब्देन कथनाद्रसदोष:। अत: स्थायिभावस्य स्ववाचकपदेन काव्ये कथनं निषिद्धमेव।

स्वशब्देन संचारिभावस्योक्ति: रसदोषो भवति यथा—

''जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने''। अत्र 'लज्जा' इति संचारिभावस्य स्वशब्देन कथनाद्रसदोष:। अत: संचारिभावस्य स्ववाचकपदेन काव्ये कथनमनुचितमेव।

परिपन्थिरसाङ्गस्य विभावानुभावादीनां वर्णने रसदोषो भवति यथा—

''मानं मा कुरु तन्वङ्गि ज्ञात्वा यौवनमस्थिरम्''। अत्र यौवनस्य अस्थिरतानिवेदनं शृङ्गाररसस्य विरोधिन: शान्तरसस्याङ्ग शान्तस्यैव च विभाव इति शृङ्गारे तद्वर्णनमयुक्तम्।

विभावानुभावादिनां बोधो यदि कष्टेन भवति तत्र रसदोष:—

धवलयति शिशिररोचिषि भुवनतलं लोककोचनानन्द्रे।

ईषत्क्षिप्तकटाक्षा स्मेरमुखी सा निरीक्ष्यता तन्वी।

अत्र रसस्योद्दीपनालम्बनविभावावनुभावपर्यवसायिनौ स्थिताविति कष्टकल्पन्त। अतो रसदोष:।

अनुचितस्थाने रसस्य विस्तारं भवति चेद्रसदोषो यथा –

वेणीसंहारनाटके द्वितीयाङ्क प्रवर्तमानानेकवीरसंक्षये काले दुर्योधनस्य भानुमत्या सह शृङ्गरप्रथनम्।

अनुचितस्थाने रसस्य विच्छेदं रसदोष: कथ्यते यथा–

वीरचरिते राघवभार्गवयोराधिरूढेऽन्योन्यसंरम्भे कङ्कण-मोचनाय गच्छामिति राघवस्योक्ति: रसविच्छेदं कशेति। अतो रसदीषो भवति।

अनुचितस्थाने रसस्य पुनः पुनः दीप्तिः रसदोषः कथ्यते यथा —

कुमारसम्भवे रतिविलापः।

मुख्यरसस्याननुसन्धानं रसदोषः कय्यते यथा—

रत्यावल्यां चतुर्थाङ्के ब्राभ्रव्यागमने सागरिकाया विस्मृतिः। अनङ्गरसस्य वर्णने रसदोषः यथा- कर्पूरमञ्जर्यां राजनायिकयोः स्वयं कृतं वसन्तस्य वर्णनमनादृत्य बन्दिवर्णितस्य प्रशंसनम्। अङ्ग रसस्यातिवर्णने रसदोषः यथा-किराते सुराङ्गनाविलासादिः। प्रकृतीनां विपर्यये रसदोषो यथा-वीरचरिते धीरोदात्तस्य रामस्य धीरोद्धतवत्। छद्मना वालिवधः।

एवंप्रकारेण मुख्यत्वेन ये रसदोषा भवन्ति तेऽत्र वर्णिता जाताः। यदि एतेषां दोषाणां निवारणे यत्नो विधातव्यस्तर्हि काव्यं दोषमुक्तं भविष्यति।

*Principal I/C*
*Barabazar BTM College*
*Barabazar, Purulia-723127*
*Mob.- 09679437600*

## मेघदूतकाव्ये समासोक्तिः

**डॉ. हरिपदमहापात्रः**

मेघदूतं तावत् संस्कृतकविसार्वभौमस्य कालिदासस्य निरवद्या सृष्टिः। काव्यस्यास्य सकलसहृदयहृदयाह्लादकारितां प्रति बहूनि कारणानि समुत्प्रेक्षन्ते समीक्षकाः। अस्माभिस्तु मन्यते कविचित्तोद्योलिता भावधारा मन्दाक्रान्ताछन्दसा शब्दार्थयोथायथसाहित्यमापन्ना काव्यकोविन्दानां चित्तं नितरां चमत्करोति। कालिदासकाव्ये शब्दार्थयोः साहित्यसृष्टौ अलंकारणां कश्चनोपयोगविशेषः परिलक्ष्यते। तथा च महाकवेरस्यासीत् तथैव प्रतिभाया महोत्तमता यया सालंकारैव भाषा तदीयभावाभिव्यक्तौ स्वत एव भवति समुत्सारिता। अलंकाराणि हि निरुप्यमाणदुर्घटान्यपि प्रतिभावतः कवेरहं पूर्विकया परापतन्तीति ध्वनिकृता यदुक्तं कालिदासकाव्ये तस्य सार्थक्यं प्रायेण प्रतिश्लोकं समासाद्यते। अतश्च प्रथते समीक्षकाणां समीक्षा-उपमा कालिदासस्येति। अत्रोपमापदमर्थालंकारसामान्यबोधकमिति मन्यतेऽस्माभिः। अर्थालंकारेषु विशेषतः सादृश्योपजीव्येष्वलंकारेषूपमायाः प्राधान्यं सर्वालंकारिकसम्मतमेव। उक्तञ्च अप्ययदीक्षितेन—

''उपमैका शैलुषी सम्प्राप्य चित्रभूमिकाभेदान्।
रञ्जति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः''।। (१)

विप्रलम्भशृङ्गाररसाभिव्यञ्जनमहनीये मेघदूते कवि प्रतिभातो विनिर्गता विविधा अलंकारा रसपरिवेशने भावाभिव्यञ्जने चित्रोपस्थापने च सुतरां साहायकमकूर्वन्। विविधेषु सुप्रयुक्तेष्वलंकारेषु समासोक्ति रेवास्य प्रबन्धस्य विषयतां गाहते।

मेघदूतकाव्ये प्रयुक्तायाः समासोक्तेः समीक्षायाः पूर्वं समासोक्तेः स्वरुपविवर्तनमधिकृत्य समासतः किञ्चित् प्रस्तूयते। नाट्यशास्त्रविष्णुधर्मोन्तरपुराणे विहाय सर्वेष्वलंकारग्रन्थेषु अस्याः स्वरुपं पर्य्यलोचितमालोक्यते। अमृतानन्दयोगिकेशवमिश्रप्रमुखानां ग्रन्थसंवादादवगन्तुं शक्यते अलंकारस्यास्य नामान्तरम् अन्यापदेश इति। तथाचोक्तं केशवमिश्रेण— अन्यदेवाभिप्रेत्य अन्याभिधानं समासोक्तिः। विचित्रिताभिर्विकाशपरम्पराभिः समासोक्तिरियं तदीयमाधुनिकं स्वरुपमलभत। प्राप्यमाणेष्वलंकारग्रन्थेषु भामहविरचितेकाव्यालंकार एव प्राथम्येन समासोक्तेः लक्षणमेवं परिप्राप्यते—

''यत्रोक्ते गम्यतेऽन्योऽर्थस्तत्समानविशेषणः।
सा समासोक्तिरुद्दिष्टा संक्षिप्तार्थतयायथा''।।

तथाहि यत्रैकस्मिन्नर्थ उक्ते सति तत्समानविशेषणमर्थान्तरं गम्यते तत्र समासोक्तिर्नामालंकारो भवति। उदाहृतञ्च तेनैवम्—

''स्कन्धवानृजुरव्यालः स्थिरोऽनेकमहाफलः।
जातस्तरुरयं चोच्चैः पातितक्ष नथस्वता''।। (२)

फलादिसमन्वित: समुन्नत: कश्चिद् वृक्षो वायुना निपातित इति तावद् वाच्योऽर्थ:। तस्माच्चर्थात् पुर्व समुन्नतिथाक् पश्चात् पतनशील: कश्चित् महापुरुष: प्रतीयते। विशेषणानि अर्थद्वितये प्रयोज्यानि। अत्रेदवधेयम् - समासोक्तौ वाच्यव्यङ्ग्ययोरर्थयो: कस्य प्रस्तुतत्त्वं कस्य चाप्रस्तुतत्वमिति विषये भामहेन स्पष्टताया न किमप्युक्तम्। किञ्च अप्रस्तुतप्रशंसात् समासोक्तेराधुनिकष्टिसम्मत: प्रभेदोऽपि नानेन प्रकाशित:। तथापि समासोक्ते: स्वरुपगत क्रमविकशे भामहस्यावदानं नोपेक्षणीयम्। तथाहि विशेषणसाम्यं समासोक्ते: वैशिष्टमेकमिति नव्यैरालंकारिकैर्यदभ्युपगतं तस्य सूचनं लक्षणेऽस्मिन् समासाद्यते। अपि च समासोक्तेर्भामहकृतं लक्षणमिदमभिनवगुप्तेन लोचनटीकायामुद्धृत्य आधुनिकदृष्टिसम्मतोदाहरणे तस्य समन्वय: प्रदशित:। एतेन वक्तुं शक्यते यत् समासोक्तेराधुनिकस्वरुपस्य बीजं भामहकृते तल्लक्षणे निहितमासीत्।

समासोक्ते स्वरुपचिन्तने भामहात् समधिकं कृतित्वं प्रदर्शितमुद्भटेन। तथाहि तेन प्रथममेव सुचितं गत् प्रस्तुतार्थकं वाक्यं यत्र अप्रस्तुतयर्थमाक्षिपति तत्र समासोक्ति:। तेन कृतानां लक्षणोदाहरणवृत्तीनां पर्य्यालोचनात: निरुक्ता समीक्षा स्पष्टा भवेत। अपि च समासोक्तितोऽप्रस्तुतप्रशंसाया नव्यालंकारिकसम्यतप्रभेदकरणेऽपि उद्भटाचार्य्यस्य कृतित्वं सुतरामोव समुन्नेयम्। भामहोद्भचाभ्यां प्रदर्शितं मार्गमेवावलम्व्य मम्मटेन काव्यप्रकाशे समासोक्तेर्लक्षणमेवं विहितम्—

परोक्तिर्भेदकै: श्लिष्टै: समासोक्ति:। (३)

तथाहि प्रकृतार्थप्रतिपादकवाक्येन ... श्लिष्टविशेषणमाहात्माद् यदप्रकृतस्यार्थस्याभिधानं ... सा समासोक्तिरिति तेन व्याख्यातम्।

समासोक्तेराधुनिकस्व रुपसाकलने रुय्यकस्य कृतित्वं विशेषतोऽवधारणीयम्। आलंकारिकेणानेन उद्भटमेन्नुसृत्य विशेषणसाम्यमेव अप्रस्तुतार्थावगतौ कारणत्वेनाङ्गीकृतम्। तथाचोक्तं तेन विशेषणानां साम्यादप्रस्तुतस्य गम्यत्वे समासोक्ति: (४) प्रस्तुतेऽप्रस्तुतव्यवहारसमारोप एव समासोक्तेवैशिष्टयमिति प्रथममेवानेन स्पष्टतया समुद्धीषितम्। अपिच अप्रस्तुतप्रशंसात: समासोक्ति वैलक्षण्यमपि समधिकस्पष्टतां नीतमनेन। तथाचोक्तं वृत्तो—

''गम्यत्वन्तु प्रस्तुतनिष्टम् अप्रस्तुतप्रशंसाविषय: अप्रस्तुतनिष्टन्तु समासोक्तिविषय:। तत्र च निमिन्तं विशेषणसाम्यम्। विशेषणसाम्याद्धि प्रतीयमानमप्रस्तुतं प्रस्तुतावच्छेदाकत्वेन प्रतीयते। अवच्छेदक त्वञ्च व्यवहारसमारोपो न रुपस्तमाशेप:''।(५) अलंकारस्यास्य अवान्तर विभागकरणेऽपि रुय्यकस्य कृतित्वं समानरुपेणैव समुल्लेखार्हम्। समासोक्तिविषयिर्णी रुय्यकप्रदर्शितां कृष्टिं परिगृहता तत्र च केवलं लिङ्गसाम्यमधिकतया योजयता विश्वनाथेन समासोक्तेलक्षेणमेवं विहितम्—

''समासोक्ति: समैर्यत्र कार्यलिङ्गविशेषणै:।
व्यवहारसमारोप: प्रस्तुतेऽन्यस्य वस्तुन:।।''(६)

अलंकारस्यास्य विभागकरणेऽपि रुय्यक एव प्रायेणानुसृतो विश्वनाथेन। तथाहि कार्यभित्तिका लिङ्गोपजीव्या विशेषणमुला चेति समासोक्तिः प्रथमतस्त्रिविधा। विशेषणमुलापि समासोक्तिः पुनः श्लिष्टतया साधारण्येन औपम्यगर्भत्वेन चेति त्रिप्रकारा। औपम्यगर्भविशेषणमुला समासोक्तिरपि उपमागर्भा रुपकगर्भा एतदुभयसाङ्कर्य्यगर्भा चेति त्रिप्रकारा भवितुमर्हति। अतः साकल्येन समासोक्तिः सप्तविधा। वस्तुतस्तु विश्वनाथेन औपम्यभित्तिका समासोक्तिः परकीयाभिप्रायेण पर्यालोचिता। विश्वनाथस्य स्वकीयमते तत्रक्रमेण उपमाया रुपकस्य तयोः सङ्करस्य च प्राधान्यमिति तत्र तत्र उपमादयोऽलंकारा एव भवितुमर्हन्ति। रुय्यकमन्तुसृत्य विश्वनाथेनापि व्यवहारसमारोपदृष्टया समासोक्तेश्चतुविधित्वमभ्युपगतम्। तद् यथा लौकिके वस्तुनि लौकिकस्य वस्तुनः शास्त्रीये वस्तुनि शास्त्रीयस्य वस्तुनः लौकिके शास्त्रीयस्य शास्त्रीये च लौकिकस्य व्यवहारसमारोपः। व्यवहारसमारोपरुपे वैशिष्टये गौरवमारोपयता पण्डितराजेन जगन्नाथेन समासोक्तेर्लक्षणमेवं विहितम्—

''यत्र प्रस्तुतधर्मिको व्यवहारः साधारणविशेयणमात्रोपस्था-पिता प्रस्तुतधर्मिकयवहाराभेदेन भासते सा समासोक्तिः''। (७)

प्राचीनानां भामहादीनां मते आक्षेपशकत्या अप्रस्तुतधर्मिको व्यवहारः प्रतीयते। मतमिदं युक्त्या निराकृत्य व्यञ्जनावृत्यैव तादृशो व्यवहारो बोध्यत इति पण्डितराजेन प्रतिष्टापितम्। रुय्यकाप्ययदीक्षितप्रमुखैर्मन्यते समासोक्तौ व्यवहारसमारोपो रुपके तु रुपसमारोप इति। पण्डितराजेन मतमिदं युक्त्या निराकृत्य रुपसमारोपपूर्वको व्यवहारसमारोपः समासोक्तेर्वैशिष्ट्यमिति प्रतिष्ठापितम्। समासोक्तेराधुनिकस्वरुपसमुल्लासे एते आलंकारिका लभन्ते प्राधान्यम्।

दण्डिप्रमुखैरालंकारिकैः समासोक्तेः स्वरुपनिर्धारणं यद् विहितं तन् नव्यदृष्ट्या नातीव हृव्यतां भजते। दण्डिना कृतं लक्षणं नव्यदृष्ट्य अप्रस्तुतप्रशंसाया लक्षणस्य समीपचर-मिवाभाति। वामनेन रुद्रटेन च समासोंक्तेर्यल्लक्षणं निगदितं तदपि नवीनालंकारिक सम्मतामप्रस्तुतप्रशंसामेव स्मारयति।

वैदिककालादारभ्येदानीन्दकालं यावत् परिलक्ष्यमावासु कविवाङ्निर्मितिषु यव्पपि समासौक्तेरस्याः विचित्रं रुपचित्रं परिप्राप्यमाणां भवति तथापि प्राकृतिकेषु वस्तुषु मानविकस्य वस्तुनी व्यवहारसमारोपरुपा समासोक्तिरेव परिसंख्यादृट्या प्राधान्यं लभमाना प्रतिभाति। साम्प्रतं कालिदासकृते मेधदुतकाव्ये समासोक्तेः प्रयोगवैचित्र्यं समीक्षितुं यत्रः समाधीयतेऽस्माभिः।

समग्रमेव मेघदुतकाव्यं सामान्यात्मा समासोक्तिमुलकमिति नः प्रतिभाति। तथाहि अत्र प्रस्तुते 'धुमज्योतिः सलिलमरुतां' सन्निपातरुपे मेघे प्राकृतिकपदार्थविशेषे चेतनावतो मित्रतामापन्नस्य दुतस्य व्यवहारः समारोपितः। एतद्व्यतिरेकेण काव्योपनिबद्धेषु श्लोकेषु समासोक्तेर्बाहुल्यं नयनयोरापतति। तथाहिबद्धेषु श्लोकेषु समासोक्तेर्बाहुल्यं नयनयोरापतति। तथाहि —

''मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरुपं
सन्देशं मे तदनु जलद! श्रोष्यसि श्रोत्रपेयम्।

खिन्न: खिन्न: शिखारिषु पद् न्यस्य गन्तासि यत्र

क्षीण: क्षीण: परिलघु पय: स्त्रोतसाञ्चोपयुज्य।।'' (८)

श्लोकस्यास्य द्वितीयार्धे कार्यसाम्पवशान् मेघे प्रस्तुते अप्रस्तुतस्य पथिकस्य व्यवहार: समारोपित:। तादृशव्यवहारसमारोपश्च तस्यमेधस्य गमनसोविध्यं समभिव्यञ्चयन् काव्यार्थस्योपयोगं विधते।

''स्थित्वा तस्मिन् वनचरवधुभुक्तकुञ्जे मुहुर्तं

तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्ण:।

रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां

भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य''।।(९)

अत्र कार्यसादृश्यात् लिङ्गसादृश्याच्च रेवाविन्ध्ययोर्नायिकानायकयोर्व्यवहारसमारोपो जात:। तेन च मुलीभूतस्य विप्रलम्भशृङ्गाररस्य परिपोषो भवति।

''तेषां दिक्षु प्रथितविदिशालक्षणांराजधानीं

गत्वा सद्य: फलमविकलं कामुकत्वस्य लब्धा।

तीरोपान्तस्तनितसुभगं पास्यति स्वादु यस्मात्।

सभ्रूभङ्गं मुखयिव पयो वेत्रवत्याश्चलोर्मि।।''(१०)

अनयैव रीत्या कविना बहुत्र यक्षस्य स्वप्रियया सह मेलनाकुतस्य खण्डं चित्रं दुतस्य मेघस्य व्यवहारवर्णनच्छद्मना समासोक्ति माध्यमेन समङ्कितम्। स्वमेव पुर्णमेघस्य २९संख्यके श्लोके मेघनिर्विन्ध्योर्नायकनायिकाभावं समारोप्य तयोर्मेलनचित्रं चित्रीकृतं कविना।

''जालोदगीर्णैरुपचितवपु: केशसंस्कारधूपै-

र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहार:।

हर्म्येष्वस्या: कुसुमसुरभिष्वध्वरवेदं नयेथा

लक्ष्मीं पश्यन् ललितवनितापादरामाङ्कितेषु।।''(११)

श्लोकेऽस्मिन् कार्यानुरुप्यान् नवागतस्य भोज्यादिप्राप्त्या पुष्टशरीरस्य प्राप्तोपहारस्य जामात्रादिबन्धुजनस्य व्यवहारो मेधे समारोपित:। तेन च दुतस्य जीमुतस्य मार्गक्लेशापनोदनरुपं गमनानुकुल्यं समभिव्यज्यते।

''तस्मिन् कालेनयनसलिलं योषितां खण्डितानां

शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु।

प्रालेयास्त्रं कमलवहनात् सोऽपि हर्तुं नलिन्या:

प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूय:।।''(१२)

श्लोकोऽत्र लिङ्गकार्यसाम्यमभिलक्ष्य कविना नलिनीसूर्ययोर्नायिका नायकयोर्यवहाररोपणं कृतमिति समासोक्ति:। सूर्यसङ्कमवञ्चिताया नलिन्या: करुणं चित्रमत्र तथा समासोक्त्या समभिव्यज्यते।

तत्र च विरहिण्या यक्षपत्न्या विरहकारुण्यस्य प्रतिविम्बनं प्रत्यक्षीक्रियते सहयैः।

''गौरीवक्त्रभ्म्कुटिरचनां या विहस्येव फेनैः।

शम्भोः केशग्रहणमकरोदिन्दुलग्रोर्मिहस्ता।''(१३)

श्लोकार्धेऽस्मिन् कार्यसाम्याद् गौरीगङ्गयोः परस्परसपत्नीव्यवहारसमारोपात् समासोक्तिः। काव्यस्यान्तिमे श्लोके मेघमुद्दिश्य यक्षेणोक्तम्-

''इष्टान देशान् विचर जलद प्रावृषा सम्भृतश्री-

र्माभुदेवं क्षणयपि च ते विद्युता विप्रयोगः।।''(१४)

अत्र पुस्त्रीलिङ्गसादृश्यमुपजीव्य मेघवित्पुतोर्नायकनायिकाव्यवहारसमारोपात् जायमाना समासोक्तिः मेघस्य विरहार्ति समभिव्यञ्चयन्ती पत्नीरुपेण कल्पितया विव्युना सह बन्धोर्मेधस्य चिरं सम्मेलनाकुतं प्रकाशयति।

निरुक्तप्रकारेण समीक्षितेषु श्लोकेषु आलंकारिकदृष्टया व्यवहारसमारोपभितिका समासोक्तिजाता। किन्तु विद्यन्ते अन्ये केचन श्लोका येषु समासोक्तेमहिती सम्भावनासीत्। परन्तु आलंकारिकविचारपद्धत्या तत्र अलंकारान्तराणि समभवन्। ते श्लोकाः समीक्ष्यन्ते–

''आवृच्छस्व प्रियसस्वममुं तुङ्गमालिङ्ग्य शैलं

वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलाषु ।

काले काले भवति भवति यस्य संयोगमेत्य

स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो वाप्यमुष्म्।।''(१५)

अत्र श्लोके प्रियसखम्' इति शव्दतः अनुक्त्ना यदि 'तव प्रियम्' इत्यादिरुपेण उच्येत तर्हि मेघचित्रकुटयोः कार्यसाम्यवशाद् बन्धुद्वयव्यवहारसमारोपात् समासोक्तिः स्यात्। यथा भवनु अलंकारप्रयोगो मेघस्य बन्धुरुपेण चित्रकूटपर्वतस्योपस्थापनमत्र कवेरभिमतमित्यनुमानस्यासत्यवकाशः। तेनात्र बन्धुव्यवहारसमारोपभित्तिकायाः समासोक्तेरारीत् सम्भावना।

एवमत्र काव्ये प्रयुक्तेषु विविधेप्वलंकारेषु समासोक्तेरेव परं प्रधान्यं परिदृश्यते। पुर्वमेघोत्तरमेघनामक विभागाद्वयान्वितस्य मेघदूतस्य पूर्वमेघाख्ये प्रथमे विभाग एव समासोक्तेस्तथाविधाप्रचुरता अनया समासोक्ति परम्परायोजनया नमनदीनगरीमयो मेघगमनमार्गः सजीवतया प्राणोच्छ्लतया च प्रतिभाति।

**पादटीका**

१. चित्रमीमांसा पृः ३३

२. काव्यालंकार- २/८०

३. काव्यप्रकाश-पृष्ठा १४८

४. अलंकारसर्वस्वम्- पृष्ठा ८४

५. अलंकारसर्वस्वम्-पृष्ठा ८४-८५
६. साहित्यदर्पण: १०/७४
७. रसगङ्गाधर: - पृष्ठा-२१५
८. पुर्वमेघे श्लोक: १३
९. पुर्वमेघे श्लोक: १९
१०. पुर्वमेघे श्लोक: २४
११. पुर्वमेघे श्लोक: ३५
१२. पुर्वमेघे श्लोक: ४२
१३. पुर्वमेघे श्लोक: ५३
१४. पुर्वमेघे श्लोक: ५५
१५. पुर्वमेघे श्लोक: १२

Sankrail A.B.S. Mahavidyalaya,
West Bengal

## अभिज्ञानशकुन्तले अलङ्काराः सामासिकी समीक्षा

**डा. सुनीता बर्मन**

उपमा कालिदासस्य इति आभाणकं सर्वेषांसुविदितम् अत्र उपमापदेन सर्वेषामेव अलङ्काराणां ग्रहणम्। तथा च उक्तम् अप्पयदीक्षितेन चित्रमीमांसायाम् –

**'उपमैकाशैलूषी संप्राप्ता चित्रभूमिकाभेदान्।**
**रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः'।**

कालिदासस्य अलङ्कार प्रयोगे किमपि वैलक्षण्य विद्यते इति तावद् आभानकसास्य तात्पर्यम्। अभिज्ञानशकुन्तलम् नाटकात् आभानकसास्य यथार्थ्यम् प्रदर्शयितुम् प्रवन्धेऽस्मिन् प्रयत्नो विधीयते। शकुन्तलाया रूपं वर्णयता विदूषक समीपे राज्ञा दुष्यन्तेन उक्तम् -

**चित्रेनिवेश्य परिकल्पितसत्त्वयोगा**
**रूपोच्चयेन मनसा विधिना कृतानु**
**स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे,**
**धातुर्विभूत्वमनुचिन्त्य वपुश्च तस्याः।। २/९**

अस्य अयम् अर्थः विधाता प्रथमतः अस्याः सुन्दर्य्याः रमण्याः चित्रं विलिख्य पश्चात् अत्र चित्रे प्राणसंयोगं कृतवान् अथवा रूपसमूहेन सा शकुन्तला विधात्रा मनसा एव निर्मिता। विधातोः विभुक्तं विचिन्त्य शकुन्तलायाः निरोवद्यां सौन्दर्य्यं विचार्य मया एवम् उच्यते इयं शकुन्तला सर्वोत्तमा स्त्रीरत्नसृटिः। श्लोकांसस्य प्रथमार्धे सन्देहालङ्कारः तृतीयेपादे शकुन्तला स्त्रीरत्नोसृष्टयोः अभेदोपि अपरेत्यनेन भेदाध्यवसायनात् अतिशयोक्तिः। एताभ्यां सन्देहातिशयोक्तिभ्यां शकुन्तलायाः अलोकसामान्या रूपसम्पत्तिः अभिव्यवज्यते। शकुन्तला न केवलं दुष्यन्तस्य वासनायाः प्रतिमूर्त्तिः इत्यपि अभिवज्यमान्य श्लोकसास्य काव्यसौन्दर्य्यं नितरां वर्द्धयति। रूपवर्ननायां विधिनानां प्राकृतिकपदार्थानां उपमानत्वं कालिदासकाव्ये सुलभरूपमेव। अपिच शकुन्तलायाः रूपम् अधिकृत्य दुष्यन्तेन उक्तम् अनाघ्रातं पुष्पम्। अत्र श्लोके प्रयुक्तया मालोपमया तथा परिकारालङ्कारेण च शकुन्तलायाः रूपं सम्भोगाभावेन सम्पूर्णं स्वस्थम् अभिनवञ्च इत्यार्थः अभिवज्यमानः श्लोकसास्य सौन्दर्यं नितरां पुष्णाति। तथाच शकुन्तलां वर्नयता दुष्यन्तेन उक्तम् –

**'अधरः किशलयरागः कोमल विटपानौ कारिनौ वाहु।**
**कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्।१/१८**

तस्याः शकुन्तलायाः अधरे नवोद्गतस्य पल्लवस्य रक्तिमा वाहुयुगले विटपस्य सुषमा अङ्गेषु अङ्गेषु कुसुमस्यइव यौवनस्य लोभनीयता। एवम् अत्र प्राकृतिक जगतः उपमानानि समादायः कविना शकुन्तलायाः निरुपमं चित्रं सममङ्किकतमं विर्मूतस्य मानसिकभावस्य प्रकाशमेहपि कालिदासीया उपमा नितराम् उपयोगिनी परिदृश्यते। तथाहि अभिज्ञानशकुन्तलनाटकस्य प्रथमङ्कस्य

अन्तिमभागे शकुन्तलायां विर्निगतायां अपि दुष्यन्तः तत्स्थानं परित्यक्तुं मानषिकीं द्विधाम् अनुभवन् व्रवीति –

**'गच्छन्ति पुरः शरीरं धावति पश्चादसंस्थितं चेतः।**

**चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य'। १/३१**

तथाहि यथा ध्वजदत्तेः वाताभि मुमं नीयमाने त्वदीय पताका वायुना पश्चाददिशि चाल्यते तथा शरीरे अनुयात्रिकाभिमुखं नियमानेऽपि मनः शकुन्तलानुरागेन तां प्रति पश्चाद्दिशि चाल्यते। एवमत्र उपमयानया दुष्यन्तस्य सुन्दर्य्याः शकुन्तलायाः वल्कलपरिधानऽपि शोभासम्पादकम् अभूत् इति प्रशंसयता दुष्यन्तेन उक्तम्।

**'सरसिजमनुविद्धं शैवलेनापि रम्यं**

**मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति।**

**इयमधिकमनोज्ञा बल्कलेनापि तन्वी**

**किमिव हि मधुरानां मन्डनं नाकृतीनाम्।।१/१८**

तथाहि शैवलेन संवद्धम् अपि पद्मं मनोहरम एव भवति। चन्द्रस्य मलिनोऽपि कलङ्कः चन्द्रस्य शोभां विस्तारयति एवं शकुन्तलायाः स्वभावसुन्दर्य्याः वल्कलधारणं शोभां अतिशयितं करोति। मधुरानाम् आकृतिविशेषाणां सर्वमेव बस्तुजातं रम्यम् अरम्यं वा शोभावर्द्धकं भवति। अत्र प्रयुक्ताभ्यां प्रतिस्तुपमा अर्थान्तरन्यासाभ्यां शकुन्तलायाः वल्कलपरिहितायाऽपि नयनविलोभियं सौन्दर्यं दुष्यन्तस्य इव सहृदयस्य हृदयमपि समाकर्षति। औचित्यानुसारित्वं कालिदास प्रयुक्तनाम् अलंकारानां एकं समुलेमार्हं वैशिष्टम्। महर्षिः कण्वः आश्रमं प्रत्यावृत्त आकाशवाण्याः दुष्यन्तशकुन्तलोः प्रणयवृत्तं ज्ञात्वा शकुन्तलां सम्वोध्य एवं उक्तवान दिष्ट्या धूमाकूलितदृष्टेः अपि यजमानस्य पावक एर आहुतिः पतिता वत्स्ये, सुशिष्यपरिदत्ता विद्याइव समोचनीया संवृत्ता', यजमानस्य पावके एव निक्षिप्ता आहुतिः। अत्र ऋषेः कण्वस्य याज्ञिकस्य अनुरूपानि एव उपमानानि मुखात् विर्निगतानि। एवं अत्र उपमायाः रक्तौचितं सुतरांमेव लक्षनीयम्। शकुन्तलायां पतिगृहं प्रस्थितायाम् आत्मनः चेतसः स्वस्थत्यं प्रकाशयता कण्वेन उक्तम्।

**'अेथा हि कन्या परकीय एव तामद्य संप्रेष्य परिग्रहीतुः**

**जातो ममायं विशदंप्रकामं प्रत्यर्पितन्यास इवान्तरात्मा।'४/२२**

अनया उक्त्या महर्षेः कण्वस्य पितृहृदयं समअभिव्यक्तं भवति। कालिदासीय उपमायाः विशालत्वं वैचित्र्यञ्च सुतराम एव समुत्रेयम्। पतिगृहे प्रस्थानकाले रोरुद्यमान्यं शकुन्तलाम् उद्दिश्य तातकाश्यपेन उक्तं -

**'तनयोमचिरात् प्राचीवार्कं प्रसूय च पावनं**

**मम विरहजां न त्वंवत्से! शुचं गणयुष्यसि'।४/१९**

अस्यायम् अर्थः हे वत्स्ये शकुन्तले पूर्वादिक् यथा सूर्यं प्रसूते तथैव त्वम् अचिरात् पुत्रमेकं

प्रसूय मम विरहजनितात् शोकात् विमुक्ता भविष्यसि नाटकासस्य चतुर्थे अङ्के महर्षेकण्वे: समीपे अमरीवा वागेवम् उक्तवती –

**'अवेहि तनयं व्रक्षन् अग्निगर्भां शमीमिव'।**

व्रह्मन्! तवेहि सा तनया अग्निगर्भा शमीमिव एवं विधानु उक्तिषु प्रयुक्ता: उपमा विचित्रा महनीया च तथा प्रयोक्त: वोद्धुश्च अभिज्ञताया अनुरूपा:।

अनया दिशा निविष्टचेतसा कालिदासस्य काव्यानि यदि समीक्ष्यन्ते तर्हि तत्र प्राप्यमाना अलंकारा: स्वाभाविकभावेन काव्यदेहेन सह सम्वद्धा इव प्रति भान्ति। रसाक्षिप्तता अपृथग्यत्ननिर्वत्यता चेति वैशिष्ट्य द्वितयं यत् आनन्दवर्धनेन समीरितम् तदत्र कालिदासकाव्ये सुलभरूपमेव।

**अध्यापिका**
**संस्कृत विभाग:**
**विवेकानन्दमिशन् महाविद्यालय:**

## गुणालङ्कारयोः विमर्शः

ढ. सुशान्त प्रधानः

काव्यस्वरुपविमर्शे महती परम्परा वरीवर्त्ति ।अलंकारं विना काव्यत्वं चिन्तयितुं न शक्यते इति हेतोः शब्दार्थशरीरस्य काव्यस्य शोभाधायकतत्त्वरुपेण अलंकारस्य अनिवार्यता प्राचीनैः आलंकारिकैः स्वतः स्वीकृता ।काव्यात्मविवेककाले स्वरुपाधायकस्य तत्त्वस्य शोभाधायकधर्मस्य च पार्थक्यं स्वीकृतम् ।शोभाधायकधर्मेषु स्थिरास्थिरधर्माणां च भेदः प्रतिपादितः ।एवं गुणालंकाराणां लौकिकदृष्टान्तपुरःसरमलौकिककाव्येऽपि भेदः निरुपितः ।तयोः भेदाभेदविषये विहङ्गावलोकनं प्रवन्धेऽस्मिन् प्रस्तूयते ।

उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः इति प्रतिपादितदिशा गुणालङ्काररीतयः कविताकामिन्याः उत्कर्षकाः सन्ति । अथ चालङ्कारहीनं काव्यं तथैवोपहासास्पदं भवति यथोष्णतारहितः वह्निः । अतएवोक्तं पीयूषवर्षेण जयदेवेन –

अङ्गीकरोति यः काव्यं शब्दार्थावनलंकृती ।
असौ न मन्यते कस्मादनुष्णमनलं कृती ।।[१]

अतो गुणाः इवालङ्काराः अपि काव्यशोभाकर्त्तारः अचलस्थितयश्च । तस्मात् गुणालङ्कारयोरभेदमापतति । तदत्र विचार्यते गुणालङ्कारयोर्भेदोऽभेदो वा ।

तत्रालङ्कारिकेषु सर्वप्रथमः महाकविर्दण्डी दृष्टिपथमवतरति, तेन काव्यादर्शे प्रतिपादितं यत् – काव्यशोभाकरान् धर्मानलंकारान् प्रचक्षते ।[२] इत्थं काव्यशोभायाः कर्त्तारो धर्मो गुणा अपि अलंकारशब्देन व्यवहृताः । तदनन्तरं वामनः गुणालंकारयोः भेदं काव्यालंकारसूत्रे प्रतिपादितवान् –

काव्यशोभायाः कर्त्तारो धर्माः गुणाः,[३] तदतिशयहेतवस्त्वलंकाराः अर्थात् काव्यशोभाजनकाः गुणाः तदुत्कर्षहेतवोऽलंकारा इति ।

अलंकारसूत्रे च काव्यं ग्राह्यमलंकारात्,[४] सौन्दर्यमलंकारः,[५] अलंकृतिरलंकारः अलंक्रियते अनेनेति करण-व्युत्पत्त्या पुनरलंकारशब्दो यमकोपमादिषु वर्त्तते । स दोषगुणालंकारहानोपादानाभ्याम् इत्यादि सन्दर्भेण यद्यपि गुणोऽप्यलंकारशब्देनैव प्रतिपादितः ; तथापि करणव्युत्पत्त्यालंकारेषु भावव्युत्पत्त्या गुणेष्वलंकारशब्दो वर्त्तते । इत्थं व्युत्पत्तिभेदात् गुणालंकारयोर्भेदः सिध्यति ।तदनन्तरं भट्टोद्भटः भामहवृत्तौ प्रतिपादितवान् यत् समवायवृत्त्या शौर्यादयः संयोगवृत्त्या हारादयः इत्यस्तु गुणालंकाराणां भेदः ।ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिः इति गड्डलिकाप्रवाहेणैव एषां भेदः ।

तस्यायमाशयः – लौकिकाः गुणालंकाराः शौर्यविहारादयः समवेतत्व-संयुक्तत्वसम्वधेन मानवहृदये वर्त्तन्ते इति तेषां भेदोऽस्तु ।पनुरलौकिकानां गुणालंकाराणां माधुर्याद्यनुप्रासोपमादीनां काव्ये एवेऽनैव समवायसम्बधेन स्थितिरिति तेषां भेदोऽनुपपन्नः । तस्माल्लौकिकदृष्टान्तमुखेनालौकिकयोर्गुणालंकारयोर्भेदाभिधानं गड्डलिकाप्रवाहन्यायेनासङ्गतम् ।

यथैका गड्डलिका केनचिद्धेतुना पुरो गच्छति, निमित्तविचारं विनैवान्या अपि तामनुगच्छन्ति अग्रिमाया: कूपादिपाते इतरा अपि कूपादौ पतन्ति तथैव केनापि प्राक्तनालंकारिकेण कयाचित् भ्रान्त्या गुणालंकारौ भिन्नत्वेनोक्तौ, इतरे च आधुनिका अपि हेतुविचारं विनैव तदनुसारं तद्भेदं वदन्ति तदयुक्तम्।

तत्रभवान् मम्मट: गुणालंकारयोराश्रयभेदमपि दर्शितवान् यथा –

ये रसस्यांगिनो धर्मा: शौर्यादय इवात्मन: ।
उत्कर्ष-हेतवस्ते स्युरचलस्थितयो गुणा: ।।[६]

यथा चेतनस्य जीवात्मन: शौर्यादय: धर्मास्तथैव काव्ये प्राधान्येन स्थितस्य रसस्य ये उत्कर्षहेतव: अचलस्थितयश्च धर्मास्ते गुणा: स्यु: । अनेन रसोत्कर्षकत्वे सति रसाव्यभिचारिस्थितित्वम्। अव्यभिचारेण रसोत्कर्षकत्वमिति लक्षणद्वयं फलितं गुणस्य। तेन गुणानां रसधर्मत्वकथनेन, रसाव्यभिचारिस्थितित्वेन, नियमरसोपकारकत्वेन च गुणेषु अलंकाराणां नातिव्याप्ति: । अलंकाराणां रसव्यभिचारिस्थितित्वात् नियमेन रसोपकारत्वाभावात्। श्रीमता मम्मटेनैव अलंकारलक्षणमेवं प्रतिपादतिम्।

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलंकारास्तेऽनुप्रासोपमादय: ।।[७]

ये धर्मा: अङ्गद्वारेण अङ्गिनो रसस्यांगभूतौ शब्दार्थौ तद्द्वारेण तदुत्कर्षजननसुखेन अङ्गिनं रसं सन्तं जातुचित् न तु नियमेन उपकुर्वन्ति ते धर्मा:, अनुप्रासोपमादयोऽलंकारा:। यत्र तु नास्ति रस: तत्रोक्तिवैचित्र्यमात्रपर्यवसायिन: क्वचित्तु सन्तमपि रसं नोपकुर्वन्ति। यथा अंगनासु सति लावण्ये हारादय: तस्योत्कर्षका: यत्र लावण्यं नास्ति तत्र वैचित्र्यमात्रपर्यवसायिन: । क्वचित्तु विद्यमानमपि लावण्यं नोत्कर्षयन्ति । यथा लावण्यवतीषु सुकुमारशरीरावयवासु योषित्सु ग्रमीणालंकारा:, इत्थं शब्दार्थवृत्तित्वे सति अनियततया रसोत्कर्षकत्वमलंकारत्वमिति फलितो भेद: ।

ननु रीत्यनतिरिक्तवृत्तय: सन्तीति ध्वन्यालोके प्रपञ्चितम्। अथ तृतीयोद्योते गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा[८] इति कारिकाव्याख्यावसरे गुणसंघटनैक्यपक्ष: प्रतिपादित:। तस्यायमाशय: – धर्मधर्मिणोस्तादात्म्यं भवति । संघटनाधिकरणम् धर्मित्वात् गुणत्वाधेया: धर्मत्वात्। तन्नये गुणा: संघटना चेत्येकं तत्त्वम्। काव्यप्रकाशेऽपि —

मूर्ध्नि वर्गान्त्यगा: स्पर्शा: अटवर्गारणौ लघु ।
अवृत्तिर्मध्यवृत्तिर्वा माधुर्यं घटना तथा। इत्युक्तम्।।[९]

मध्यवृत्तिपदेन पांचालीरीति:, अवृत्तिपदेन वैदर्भीरीति: । इत्थं रीतिगुणयोरैक्यमापतितम्। रीतिश्च वृत्त्यनुप्रासभेद:, रीत्यानया विवेचने कृते गुणालंकारयो: ऐक्यं सिध्यतीति वाच्यम् ।

तत्रोच्यते, माधुर्यव्यंजकै: वर्णैरुपनागरिकोच्यते । ओज:प्रकाशकैस्तु परुषा, कोमलपरै:। केषांचित् वैदर्भीप्रमुखा: रीतय: मता: । इत्यादिकारिकाभि: रीतिवृत्त्यनतिरिक्तत्वं सिध्यतु

नाम, न तु गुणरीतीनाम्। यतो हि माधुर्यव्यञ्जका: ये वर्णा: ते उपनागरिका भवति। एतेन माधुर्यगुण:, उपनागरिका च रीति: एकैवेति वक्तुं न शक्यते। वृत्तय: तथा च तिस्रोऽनुप्रासजातय: वृत्तय: एव। इत्थं वृत्तिरूपकजातौ, अनुप्रास: जाति: वर्त्तमानत्वप्रतिपादनमनुपपन्नम्। जातौ जातिमतो वर्त्तमानत्वं विरुद्धम्, वैशेषिकमतविरोधात्। अत: गुणाश्रया संघटना संघटनाश्रया वा गुणा: इत्येव युक्तं प्रतिभाति। इत्थं गुणालंकारभेदपक्ष एव ज्यायान्।

## Footnotes

१. चन्द्रालोक:, १.८
२. काव्यादर्श:, २.१
३. काव्यालंकारसूत्राणि, १.३.१
४. काव्यालंकारसूत्राणि, १.१.१
५. काव्यालंकारसूत्राणि, १.१.२
६. काव्यप्रकाश:, ८.६६
७. काव्यप्रकाश:, ८.६७
८. ध्वन्यालोक:, ३.५
९. काव्यप्रकाश:, ८.७४

**गृहीतानां ग्रन्थानां सूची**

१. अलंकारानुशीलनम्, डाँ राजवंश सहाय हीरा, चौखम्बा संस्कृत सीरीज् अफिस्, वाराणसी, १९७०।
२. अलंकारशास्त्रस्योतिहास:, डाँ जगदीश चन्द्र मिश्र:, चौखम्बा सुरभारती प्रकाशन, वाराणसी, १९८६
३. ध्वन्यालोक:, जगन्नाथ पाठक:, चौखम्बा विद्याभवन, वाराणसी, १९६५
४. भामह: कृत काव्यालंकार:, डाँ रमण कुमार शर्मा, विद्यानिधि प्रकाशन, दिल्ली, २००८
५. महाकवि दण्डी रचित काव्यादर्श:, आचार्य: श्रीराम चन्द्र मिश्र:, चौखम्बा विद्याभवन, वाराणसी, तृतीय संस्करण, १९८४
६. साहित्य दर्पण: ,.आचार्य: कृष्णमोहन शास्त्री, चौखम्बा संस्कृत संस्थान, वाराणसी, २०११
७. काव्यप्रकाश:, डाँ गङ्गानाथ झा, भारतीय विद्या प्रकाशन, दिल्ली, १९८६
८. चन्द्रालोक:, श्री नन्दकिशोर शर्मा, चौखम्बा संस्कृत सीरीज अफिस, वाराणसी, २०११
९. काव्यालंकारसूत्राणि, बेचन झा, चौखम्बा संस्कृत भवन, वाराणसी, २००९

संस्कृत विभाग:
उत्कल विश्वविद्यालय:,
भुवनेश्वरम्

## चन्द्रालोके व्यङ्ग्यवैभवम्

डॉ: शिव प्रसाद वेहेरा

वृत्तीनां विश्रन्तेरभिधातात्पर्यालक्षणाख्यानां।
अङ्गीकार्या तुर्या वृत्तिवोधे रसादीनाम्।।१

काव्यशास्त्रे व्यञ्जनाव्यापारेण तुरीवृत्तिरूपेण अलौकिकेन सहृदयहृदयनिष्ठेन भावनापरपर्यायेण व्यंग्यवैभवस्य बोध: आलंकारिकै: आनन्दवर्धन-मम्मट-विश्वनाथ-जगन्नाथादिभि: दर्शित:। अयं वञ्जनाव्यापार: क्वचित् व्यक्तिपदेन् क्वचित् ध्वनिपदेन, क्वचित् प्रत्यायनपदेन, क्वचित् च अवगमनादिपदै: बुध्यते अभिधियते वा। चन्द्रालोककार: जयदेव: उत्कलीय: अपि व्यञ्जनाव्यापारेण व्यंग्यार्थबोधं मनुते। यथा –

सामुख्यं विदधानाया: स्फुटमर्थान्तरे गिर:।
कटाक्ष इव लोलाक्ष्या व्यापारो व्यञ्जनात्मक:।।२

चन्द्रालोके व्यञ्जनापदं गम्भीरा इति अर्थे अपि प्रयुक्तं प्रतिभाति –

वृत्तिभेदैस्त्रिभिर्युक्ता स्रोतोभिरिव जह्नवी।
भारती भाति गम्भीरा कुटिला सरला क्वचित्।।३

इयं व्यञ्जना यदा ध्वनिपदेन उच्यते तदा ध्वननं ध्वनि: अथवा ध्वन्यते अनया इति ध्वनि: इति व्युत्पत्तिं लभते। प्रतापरुद्रयशोभूषणकारमते व्यञ्जनास्वरूपं निम्नलिखितप्रकारेण भवति -

अन्वितेषु तदार्थेषु वाक्यार्थोपस्कारार्थमर्थान्तर-
विषय: शब्दव्यापारी व्यञ्जनावृत्ति।।४ एवं च उक्तं भवति साहित्यरत्नाकरे-
अन्वितेषु पदार्थेषु योऽस्यार्थान्तरगोचर:।
वाक्यार्थोपस्क्रियायै स व्यापारो व्यञ्जनं भवेत्।।५

व्यञ्जनाव्यापारावान् शब्द: व्यञ्जक:। पदार्थेषु अन्वितेषु वाक्यार्थोपस्कारार्थम् अर्थान्तरविषय: शब्दव्यापार: व्यञ्जना इति उच्यते।

एवंभूताव्यञ्जना त्रिविधा भवति। शब्दशक्तिमूला, अर्थशक्तिमूला, उभयशक्तिमूला चेति। शब्दशक्तिमूलाव्यञ्जना द्विविधा यथा - अभिधामूलाव्यञ्जना लक्षणामूलाव्यञ्जना चेति।

भद्रात्मनोदूरधिसेहतनोर्विशाल वंशोन्नते कृतशीलिमुखसंग्रहस्य।
यस्यानुपप्लुतगते परवारणस्य दानम्बुसेक शततं तरो:।।६

अत्र अभिधाद्वारा राजपरक: प्राकरणिकरूणेऽर्थ: बोध्यते। राजपरकम् अर्थ: बोधयित्वा अभिधा शक्तिहीना भवति। पश्चात् गजपरकं द्वितीयार्थं व्यञ्जना सूचयति। एवमत्र अभिधामूलाव्यञ्जना प्रवर्त्तते। सा च षोडषविधान् व्यंग्यार्थान् अभिव्यनक्ति। इति काव्यप्रकाशादौ द्रष्टव्यम्। चन्द्रालोके तु अभिधाविषयक मतं यथा-

द्वौ विवक्षितवाच्यस्य लक्ष्यालक्षक्रमात्मकौ।

चत्वारिंशत् युक्तै: केन भेदा: षट् चाणयो:क्रमात्।।७

अत्र य: गजपरक: अर्थ: व्यञ्जनया सूचित: व्यंगार्थरूपं वाच्यव्यंग्यम् इति नाम्ना व्यवहरति जयदेव: चन्द्रालोककार:। तदुक्तं तेन -

नाना प्रभेदा नियता क्वचित् प्रकरणादिना।

अर्थेऽर्थमन्यं वक्ति त्वद् वाच्यव्यंग्यमिष्यते।।८

काव्यप्रकाशे तु अभिधामूलव्यञ्जना एवं स्वरूपा भवति -

अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।

संयोगाद्यैरवाच्यार्थ धीकृत्व्यापृतिरञ्जनम्।।९

गंगायां घोष: इत्यादौ लक्षणाद्वारा तटरूपोऽर्थ: प्रतीयते। तटे गंगाया: शीतत्वपावनत्वादि धर्माणां बोध: गूढागूढव्यंगमूललक्षणाव्यापारेण भवति। अतएव अत्र लक्षणामूलव्यञ्जना ध्वन्यालोके अविवक्षितवाच्यध्वनितया उक्त:। अविवक्षितवाच्यक्ष्वने: चत्वारभेदा: आलंकारिकै: विद्यानाथदिभि: कृता:। यथा-

१. पदगतार्थान्तरसंक्रमित अविवक्षितवाच्यध्वनि:।

२. वाक्यगतार्थान्तरसंक्रमित अविवक्षितवाच्यध्वनि:।

३. पदगतात्यन्ततिरस्कृत अविवक्षितवाच्यध्वनि:।

४. वाक्यगतात्यन्ततिरस्कृत अविवक्षितवाच्यध्वनि:।

एतेषु एकम् उदाहरणं यथा –

स्निग्धश्यामलकान्ति लिप्तवियतो वेल्लद्बलाकाघना:,
वाता: शीकरिण: पयोदसुहृदामानन्दकेका: कला:।
कामं सन्तु दृढं कठोरहृदय रामोऽस्मि सर्वं सहे,
वैदेही तु कथं भविष्यतिहहाहा देवि ! धीरा भव।।१०

पीयुषवर्षिणा चन्द्रालोकेऽपि उक्तं यथा -

अविवक्षितवाच्यस्य द्वौ भेदौ वाच्यमेव चेत्।
अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम्।११

आर्थीव्यञ्जनास्वरूप इत्यमावहति -

वक्तृबोधव्यकाकुनां वाक्यवाच्यान्यसन्निधे:,
प्रस्तावदेशकालादेवैशिष्ट्यात् प्रतिभाजुषाम्।
योऽर्थस्यान्यार्थधीहेतुव्यापारो व्यक्तिरेव सा।।१२

एतेषु एकम् उदाहरणं यथा -

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां,

वने व्याधैः सार्धं सुचिरमुषितं भल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं,
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु।।१३

अन्यत् काव्यप्रकाशादौ द्रष्टव्यम्।

अभयमूलव्यञ्जनोदाहरणं प्रतापरुद्रयशोभूषणे काव्यप्रकरणे दृश्यते यथा -

विजितारिपुरो मूर्त्तौ विलसत्सर्वमङ्गलः।
राजमौलिरसौ भाति रुद्रदेवो जगत्पतिः।।१४

अत्र विजितारिपुर इत्यर्थ शक्तिमूलत्वं विलसत् सर्वमंगलो राजमौलिरिति शब्दशक्तिमूलत्वमित्युभयशक्तिमूलत्वम्, अत्र प्रतापरुद्रशङकरयोरुपमालंकारः भवति। उदाहरणान्तरं काव्यप्रकाशे द्रष्टव्यम्।

अतन्द्रचन्द्राभरणां समुदीपितमन्मथा,
तारकातरलाश्यामा सानन्दं न करोति किम्।।१५

अत्र उपमालंकारव्यंग्यभूतः प्रतीयते। जयदेवेन चन्द्रालोके द्विविधं व्यङ्ग्यं नवीनतया प्रोक्तम्- वक्तृस्यूतं स्वाङ्कुरितं चेति। जयदेवस्य वचनं यथा -

वक्तृस्यूतं बोधयितुं व्यंग्यं वक्तुरभीप्सितम्।
स्वाङ्कुरितमतद्रुपं स्वयमुल्लासितं गिरः।।१६

चन्द्रालोके व्यंग्यस्य अन्यप्रकारत्वमपि उपलभ्यते। यथा -

यद् व्यज्यमानं मनसः स्तैमित्यायसनो ध्वनिः।
अन्यथा तु गुणीभूतव्यंग्यमापतितं त्रिधा।।
व्यक्त एव कवचित् व्यंग्यः क्वचिदर्थस्वभावतः।
क्वचिद् चारुतरस्याग्रे स विमुञ्चति चारुताम्।।१७

काव्यप्रकाशे व्यञ्जनागम्य व्यग्यस्य वहवः भेदाः तदेफपञ्चाशत् इति पदेन। वेदे खाब्धिवियच्चन्द्राः (१०४०४) शरेषुयुगखेन्दवः (१०,४५५) इति पदाभ्यां प्रोक्ताः। लोचने साहित्यदर्पणादौ च अन्यथा भेदाः दृश्यन्ते। चन्द्रालोके मम्मटसम्मतव्यंग्यभेदाः स्वीकृताः सन्ति। यथा -

द्वात्रिंशत् द्वादशैक षट् सर्वसंकलितध्वनेः।
भेदाः स्युदेकपञ्चाशत्।।१८

इदं च व्यंग्यवैभवं काव्यानां गद्यपद्यचम्पूरूपाणाम् आत्मरूपं भवति। व्यंग्यं कदाचित् प्राधान्येन वस्तु-अलंकार-रसादिरूपेण प्रतीयमानं ध्वन्यालोके ध्वनिपदेन उक्तम्। व्यंग्यप्राधाने ध्वनिः इति वचनात् उक्तं च -

यत्रार्थशाब्दो वा तमर्थमुपसर्ज्जनीकृतस्वार्थौ।
व्यंक्त काव्यविशेषः स ध्वनिरिति सुरिभिः कथितः।।१९

ललनालावण्यप्रख्यस्य ध्वने: व्यंग्यस्य प्राधान्ये ध्वनि:। तस्य अप्रधाने तु गुणीभूतव्यङ्ग्यता। तस्या: च उष्टप्रकारता काव्यप्रकाशादौ द्रष्टव्या।

व्यङ्योऽर्थ: वाच्यात् लक्षात् अनुमेयात् च भिन्नरूपेण प्रतिभाति। इति ध्वन्यालोके काव्यप्रकाशे साहित्यदर्पणे च सविस्तरं गदितम्। व्यंग्यार्थस्य अपरं नाम प्रतीयमानम् इति। इदं योषितां लज्जा इव भवति -

प्रतीयमानच्छायैषा भूषा लज्जेव योषिताम्।

इति तृतीयोद्योते ध्वनिकारेण उक्तम्। व्यंग्यपदं ध्वन्यालोके पर्यक्तं दृश्यते-
व्यंग्यप्रधान्ये ध्वन्ति: इत्यादौ। व्यंग्यस्य कृते प्रतीयमानपदं यत् प्रयुक्तं ध्वन्यालोके -

प्रतीयमानं पुनरण्यदेव वस्त्वस्ति वाणीषु महाकवीनां।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्।।२०

व्यंग्यात् व्यंग्यस्य प्रतीतौ व्यञ्जनामलकव्यञ्जना भवति। यथा -

पश्य निश्चलनिस्पन्दा बिसिनिपत्रे राजते वलाका।
निर्मलमरकतभाजनपरिस्थिता शङ्खसूक्तिरिव।।२१

अत्र निस्पन्दा इति पदेन निर्जनस्थानस्य व्यंग्यरूपस्य बोध: भवति। अनेन बोधेन व्यंग्यरूपेण संकेतस्थानस्य व्यग्यरूपस्य बोध: भजते इति व्यञ्जनामूलकव्यञ्जना।

व्यंग्योऽर्थ: ललनालावण्यमिव तद् भूषाम् इव चेति ध्वनिकारमतम्। जयदेवमते तु कटाक्ष इव व्यंग्योऽर्थ: भजते। इति विमर्षणीयं पातञ्जलयोगसुत्रे लावण्यं कायसम्पद् इति उक्तम्। ध्वन्यालोके तु तत्त्वान्तरं प्रोक्तम्। अत्र कवि-आलंकारिकजयदेवस्य मतं स्पृहणीयं प्रतिभाति।

**पादटीप्पणी**

१. साहित्यदर्पण - ५/१
२. चन्द्रालोक - ७/२
३. तत्रैव - ७/१
४. प्रतापरुद्रयशोभूषण - २/१२
५. साहित्यरत्नाकर - ४/२
६. काव्यप्रकाश - २/१२
७. चन्द्रालोक - ७/४
८. तत्रेव - ७/१७
९. काव्यप्रकाश - २/१९
१०. तत्रैव - ४/११२
११. चन्द्रालोक - ७/३

१२. काव्यप्रकाश - ३/२९-२२
१३. तत्रैव - ३/१५
१४. प्रतापरुद्रयशोभूषण-कावायप्रकरण / १४
१५. काव्यप्रकाश - ४/७२
१६. चन्द्रालोक - ७/१३
१७. तत्रैव - ८/२
१८. तत्रैव - ७/१२
१९. ध्वन्यालोक - १/१३ वेदस्मृतिगीताप्रभृतिषु सारालंकारयोग:
२०. तत्रैव - १/४
२१. काव्यप्रकाश - २/८

M.M.S.Mahvidyalaya, JagannathPrasad, Nuagoan,Odisha

**वेदस्मृतिगीताप्रभृतिषु सारालंकारयोग:**

**डा: मेधाकुमारी**

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलंकारास्तेऽनुप्रासोपमादय:।।

उत्तरोत्तरम् उत्कर्ष: सारालंकार: उच्यते। तत्र वेदे सारालंकार: यथा –

महत: परमव्यत्कमव्यत्कात् पुरुष: पर:।
पुरुषान्नापरं किञ्चित् सा काष्ठा सा परा गति:।।

अत्र महत्-अव्यत्क-परपुरुषाणां यथोत्तरम् उत्कर्षस्य प्रतिपादनात् सार इति नामालंकार:।

मनुस्मृतौ सारालंकार: यथा –

अज्ञेभ्यो ग्रन्थिन: श्रेष्ठा ग्रन्थिभ्यो धारिणो वरा:।
धारिभ्यो ज्ञानिन: श्रेष्ठा ज्ञानिभ्यो व्यवसायिन:।।

अत्र मूर्ख-अज्ञेय-अध्येतृ-धारक-ज्ञानि-व्यवसायिन: (निष्कामकर्मयोगिन:) उत्तरोत्तर: सारताया: अर्थात् श्रेष्ठाताया: वर्णनात् सारालंकार:।१. अज्ञेभ्यो ग्रन्थिन: श्रेष्ठा: अर्थात् अज्ञेभ्यो मूर्खेभ्य: ग्रन्थिन: ग्रन्थानाम् अध्येतार: श्रेष्ठा: भवन्ति।२. ग्रन्थिभ्य: अध्येतृभ्य: अर्थात् ग्रन्थपाठकेभ्य: धारिण: ग्रन्थाशयस्य धारका: वरा: अर्थात् श्रेष्ठा: सन्ति।३. धारिभ्य: ग्रन्थाशयधारिभ्य: अर्थात् धारकेभ्य: ज्ञानिन: ब्रह्मज्ञानिन: श्रेष्ठा: वर्त्तन्ते।४. ज्ञानिभ्य: अर्थात् व्रह्मज्ञानिभ्य: व्यवसायिन: अर्थात् निष्कामकर्मयोगिन: श्रेष्ठा: भजन्ते। एवम् उत्तरोत्तरं वस्तूनां श्रेष्ठत्वप्रतिपादनात् सारालंकार: स्फट एव प्रतिभाति।

यथा वा –

भूतानां प्रणिन: श्रेष्ठा: प्राणिनां वुद्धिजीविन:।
वुद्धिमत्सु नरा: श्रेष्ठा: नरेषु व्राह्मणा: स्मृता:।।मनु. १/९६

भूत-प्राणि-वुद्धिजीवि-नर-ब्राह्मणानां यथोत्तरं श्रेष्ठत्त्वप्रतिपादनात् सारालंकार:।

ब्राह्मणेषु च विद्वांसो विद्वत्सु कृतवुद्धय:।
कृतवुद्धिषु कर्त्तार: कुर्त्तृषु ब्रह्मवेदिन:।। मनु. १/९७

ब्राह्मण-विद्वान्-कृतवुद्धि-कृत्तृ-ब्रह्मवेदिनां क्रमश: उत्तरोत्तर उत्कर्वप्रतिपादनात् पाररूपोऽलंकार।

नीतायां सारालंकार: यथा –

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्य: परं मन:।
मनसस्तु परावुद्धि र्यो बुद्धे: परतस्तु स:।।

अत्र गीतत्कौ जडवस्तु कर्मेन्द्रिय मन वुद्धि आत्मनां यथोत्तरम् उत्कर्षनात् सासलंकारमाहु।

श्रेयो हि ज्ञानमम्यासाज्ञानाव्यानं विशिष्यते।

ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम्।।१२/१२

अभ्यास-ज्ञान - ध्यान - कर्मफलत्याग - शान्तीनाम् उत्तरोत्तरम् उत्कर्ष: गीतोत्कवाक्ये प्रतियते इति साराभिधानं गच्छति। एवम्-

राज्ये सारं वसुधा वसुधायामपि पुरं पुरे सौधम्।
सौधे पल्पं पल्पे वरागनाङ्ग सर्वस्वम्।।

अत्र रुद्रटकाव्यालंकार - मम्मटकाव्यप्रकाश - विश्वनाथसाहित्यदर्पणादिषु वसुधादीनां वस्तुनाम् उत्तरोत्तरम् उत्कर्षात् सारालंकार:।

उत्कं च चन्द्रालोके – (५/९०/९१)

सारो नाम पदोत्कर्ष: सारयाता यथोत्तरम्।
सारं सारस्वतं तत्र काव्यं तत्र शिवस्तव:।।
उदारसारश्चेदभाति भिन्नोऽभिन्नतया गुण:।
मधुरं मधु पीयबषं कस्माद् कस्मात् कवेर्वच:।।

संसारे सर्वतो अधिकमाधुर्यं साहित्ये वर्तते शिवस्तोत्र च वर्त्तते इति भाव:।

अत्र संसारे सारस्वतम् अर्थात् साहित्यं-वाङ्मयं सारम्। तत्रापि शास्त्रेऽपि काव्यं सारम् अर्थात् श्रेष्ठम्। तत्र काव्येऽपि शिवस्यवं शिवस्तुतिं रूपं काव्यं सारं भवति।

जगत्सु वसुधा भाति तस्यामेक शिलापुरी।
काकतीयां वयस्तत्र तस्मिन् रुद्रनेरेश्वर:।।

अत्र सकलभूवनसारभुतं प्रतापरुद्रं विषयीपूर्वस्तचिरादस्यालंकारस्य सारेति अन्वर्थाभिधानम् इति अवोचत् विद्यानाथ: प्रतापरुद्रयशोभूषणे।

अलंकारं विना विधवा इव सरस्वती।

न कान्तमपि निर्भूषं विभाति वनिताननम्।। इति वचनम् आलंकारिकाणाम् अलंकारविषयकं मतं संकेतयति। काव्ये वर्णाविषयाणाम् उत्कर्षहेतव: अलंकारा: इति उच्यन्ते। वेद-स्मृति-गीता-अलंकारशास्त्रेषु यत् अलंकारयोग: सोऽपि प्रतिपाद्यविषयशोभावर्द्धनार्थम् एव। यद्यपि मनुस्मृतिप्रभृतौ लसत् वर्णवर्णनालंकारयोग: न दृश्यते तथापि इतिवृत्तनिवाहार्थम् अलंकारयोग: न निस्पयोजन:। इति दिक्।

अध्यापिका
संस्कृतविभाग, सामसीकलेज्
मालदा, पश्चिमवङ्ग

# प्रतिभा

Menakarani Sahoo

**नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा**
**कवित्वं दुर्लभं तत्र शक्तिस्तत्र च दुर्लभा।।**

(अग्निपुराणम्. ३३७/३.४)

कवित्वशक्तिरेव काव्यरचनार्थं कविं प्रेरयति। यथा प्रजापतिब्रह्मा स्वशक्त्या विश्वस्य निर्माणं करोति तथैव कवित्वशक्तिद्वारा एव कवि: काव्यसंसारस्य निर्माणं करोति। अत: ध्वन्यालोकाचार्यानन्दवर्धनेन यथार्थेनोक्तम्–

**अपारो काव्यसंसारे कविरेव प्रजापति:।**
**यथास्मै रोचते विश्वं तथेदं परिबर्तते।।** (ध्वन्यालोकम्)

काव्यपठनात्पूर्वकाव्यलक्षणस्य,काव्यकारणस्य,काव्यप्रयोजनस्य इत्येतेषां ज्ञानमत्यन्तमावश्यकम् । किं नाम काव्यकारणमिति विचारयाम:। काव्यकारणविषये सर्वे

**भामहस्य मतम्**

भामहेनोकं यत् काव्यं जायतो जातु कस्यचित्प्रतिभावत: ।अर्थात् प्रतिभा एव मुख्य काव्यकारणम् ।एवञ्च प्रतिभा सहैव भामह व्यत्पत्तिमपि अभ्यासमपि च काव्यकारणत्वेन प्रोक्तवान्। यथा —

**शब्दाभिधेये विज्ञाय कृत्वा तद्विदुपासनम्।**
**विलोक्यान्यनिबन्धंश्च कार्य: काव्यक्रियादर:।।** (भा. का. ल. १.१०)

**दण्डिन: मतम्**

भामह: इव दण्डिनाऽपि काव्यकारणत्वेन प्रतिभा-व्युत्पत्ति:-अभ्यासश्च प्रोक्ता।

**नैसर्गिकी च प्रतिभा श्रुतं च बहु निर्मलम्।**
**अमन्दश्चाभियोगोऽस्या: कारणं काव्यसंपद:।।**
**न विद्यते यद्यपि पूर्ववासनागुणानुबन्धि प्रतिभानमद्भुतम्।**
**श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्।।**

(काव्यादर्श, १,१०३, १०४)

**मम्मटस्य मतम्**

काव्यप्रकाशकारमम्मटस्य मतेन अपि शक्ति: (प्रतिभा), व्युत्पत्ति:, अभ्यासश्च काव्यकारणमिति मन्यते। यथा-

**शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।**
**काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे।।** (का. प्र. १/३)

मम्मट: प्रतिभां शक्तित्वेन व्याख्याति कवित्वबीजरुपसंस्कार: शक्तिरिति तस्य आशय:। अतएव तेन काव्यप्रकाशे व्यलेखि —

''**शक्ति: कवित्वबीजरूप: संस्कारविशेष:।**'' इति। (काव्यप्रकाशे, १.३)

**गोविन्दठक्कुरस्य मतम्**

गोविन्दठक्कुरेण काव्यप्रदीपे (पृ-३) शक्ति प्रतिभाया: अर्थे स्वीकृता। तदुक्तं यथा -

''**शक्ति: कवित्वबीजभूतो देवताप्रसादादिजन्मा संस्कारविशेष: प्रतिभाव्यपदेश्य:**'' इति।

**नरहरिसरस्वतीतीर्थस्य मतम्**

नरहरिसरस्वतीर्थेण काव्यप्रकाशस्य बालचित्तानुरञ्जनीव्याख्यायां (पृ-८) कवित्वबीजत्वेन प्रतिभा वर्णिता। प्रतिभेयं पूर्वजन्मसंस्कारविशेषा भवति। आह च-

''**कविस्य बीजं प्रतिभा। तद्रूपपूर्ववासनाविशेष:।**'' इति ।

**गोकुलनाथोपाध्यायस्य मतम्**

गोकुलनाथ उपाध्यायेन प्रतिभा नाम शास्त्र-काव्य-लोकव्यवहाराणां दृढतरसंस्कार: इत्युक्तम्। तदुक्तम्-

''**प्रतिभा तु शास्त्रकाव्यलोकव्यवहारगोचरो दृढतर: संस्कार:।**'' इति।

(काव्यप्रकाशस्य विवरणटीकायाम्, पृ-९५)

न केवलं एते समीक्षका: अपितु रुद्रढ-राजशेखर-आनन्दवर्धन-वामनादय: प्रतिभांकाव्यकारणत्वेन गृहीतवन्त:।

**प्रतिभाया: अर्थ:**

प्रतिभाया: अथवा शक्तिशब्दस्य व्याख्यार्थं प्रज्ञाशब्दस्य प्रयोगो भवति। अत: कथ्यते '**प्रज्ञा नवनवोन्मेष शालिनी प्रतिभा मता**'। स्मृति:, मतिस्यथा प्रज्ञाया: पारस्परिकमन्तरमनेन प्रकारेण प्रदर्शितमस्ति —

'**त्रिधा च सा (बुद्धि:) स्मृति:, मति:, प्रज्ञेति। अतिक्रान्तस्यार्थस्य स्मत्री स्मृति:, वर्तमानस्य मन्त्री मति:, अनागतस्य प्रज्ञात्री प्रज्ञा। सा त्रिप्रकारा कवीनामुपकर्त्री**'। (का.मी.पृ-१३)

त्रिवेन्द्रम्-संस्करणस्य काव्यप्रकाशस्य सम्प्रदायप्रकाशिनी टीकाया: श्लोकोऽयं समागत:–

**स्मृतिव्यतीतविषया मतिरागामिगामिगोचरा:।**
**बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञात्रैकालिकी मता।।** (का.मी.पृ-१३)

एवं परिशील्पमाने ज्ञायते यत् भारतीयपरम्परायां प्रतिभा नाम काचित् नवनवोन्मेषशालिनी अपूर्वा प्रज्ञा, या च अभ्यासजन्या, पूर्वजन्मसंस्कारजन्या, भगवत्कृपाजन्या इत्यादिरूपा। इयं च प्रतिभा लोके विजयं प्रापयति।

**प्रतिभायाः उद्गमः**

प्रतिभायाः उद्गमः कवेः पूर्वजन्मसंस्कारात् भवतीति विद्वांसः वदन्ति। यथा-

**'पूर्ववासनागुणानुबन्धि प्रतिभानमद्भुतम्।'** (काव्यदर्श-१.१०४)

**जन्मान्तरगतसंस्कारविशेषः कश्चित्।** (काव्यालंकारसूत्रवृत्ति-१.३.१६)

**अनादिप्राक्तनसंस्कारप्रतिभानस्य।** (अभिनवभारती, नाट्यशास्त्र)

**प्रतिभायाः वैशिष्ट्यम्**

पुरा प्रतिभा इत्युक्ते सर्जनात्मकता इति बुध्यते। संस्कृतवाङमये वैदिकसाहित्यादारभ्य वर्तमानपर्यन्तमुपलभ्यमानासु कृतिसू सर्जनात्मकतायाः उल्लेखः दृश्यते। वेदेषु वहूत्र गुरुशिष्ययोः संवादरूपेण कथानकाः उपलभ्यन्ते। तेषु शिष्याणां सर्जनात्मकताविकासार्थं गुरुणां प्रश्नकरणशैली मनोहारिणी वर्तते। न केवलं वेदेषु अपितु उपनिषत्सु प्रश्नाः सर्जनात्मकताविकासार्थं उपयुक्ताः सन्नि। तैत्तरीयोपनिषदप्रभृतिषु ग्रन्थेषु 'क्रियाद्वारा सर्जनात्मकतायाः विकासः' इति सिद्धान्त दृश्यते। छान्दोग्योपनिषदि सत्यकामस्य कथा वर्णिता वर्तते। तत्राश्रमस्थशिष्यः गोसंरक्षण कुर्वाण आसीत्। सः अल्पीयसि काले स्वीयसर्जनात्मकतया अपूर्वां प्रतिभां दर्शयन् चतुशशतसंख्यापरिमिताः गाः सहस्रसंख्यापरिमिता अकरोत्। कठोपनिषदि नचिकेता ब्रह्मज्ञानं स्वीयज्ञानं स्वीयप्रतिभया प्राप्नोत्। न केवलं उपनिषत्सु अपितु रामायणमहाभारतादिषु गुरुकुलवासे रामादीनामर्जुनादीनामभूतपूर्णा प्रतिभा लोकविदिता एव।

परवर्तिनिकाले साहित्यशास्त्रस्य विकासानन्तरम् अलङ्कारशास्त्रेषु तत्र तत्र काव्यलक्षणकथनमाध्यमेन विलक्षणप्रतिभायाः उल्लेखो दृश्यते। प्रायेण साहित्याचार्या प्रतिभां सर्वोतकृष्टतां मन्वते। तेषां मतम् अधः प्रस्तुयते-

**हेमचन्द्रस्य मतम्**

हेमचन्द्रः काव्यानुशासने अवदत्-

**प्रतिभैव कवीनां काव्यकरणकारणम्।**

**व्युत्पत्त्यभ्यासौ तस्या एव संस्कारकौ न तु काव्यहेतू।।** इति

अर्थात् प्रतिभा एव काव्यसर्जने हेतुर्भवति।

**चन्द्रालोककारस्य मतम्**

जयदेवोऽपि व्युत्पत्त्यभ्यास सहैव प्रतिभा काव्यस्य कारणमित्युक्तवान्। तेनोक्तम् —

**प्रतिभैव श्रुताभ्याससहिता कवितां प्रति।**

**हेतुर्मृदम्बुसम्बद्ध-बीजमाला लतामिव।।**

**आनन्दवर्धनस्य मतम्**

आचार्यानन्दवर्धनः व्यङ्ग्यार्थवगमनशक्तिः प्रतिभा इति मनुते। तेन ध्वन्यालोके उच्यते–

**''सरस्वती स्वादु तदर्थवस्तु निःष्यन्दमाना महतां कवीनाम्।**

**आलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभा विशेषम्।।**''इति।

(ध्वन्यालेके, १.६)

अपिच —

''**प्रतिपित्तॄन् प्रति सा प्रतिभा नानुमीयमाना, अपितु तदावेशेन भासमानेत्यर्थः। —प्रतिभा अपूर्ववस्तुनिर्माणक्षमा प्रज्ञा, तस्य विशेषः रसवेशवैशद्यसौन्दर्यं काव्यनिर्माणक्षमत्वम्**''। इति।

अर्थात् प्रतिभा संस्काररूपत्वे प्रतिव्यक्तिसु कार्यानुसारं विविधरूपेण दृश्यते। अतएव काव्यजगति प्रतिभाविशेषः कार्यकारी वर्तते। इयमेव कवेः अपूर्ववस्तुनिर्माणक्षमा, यया सहृदयेषु रसावेशवैशद्यत्वेन अवलोक्यते।

**अभिनवगुप्तस्य मतम्**

अभिनवगुप्तः रसात्मकबोधं चमत्कारत्वेन उररीकृत्य व्याख्याति यत् प्रतिभा साक्षात्कारस्वरूपिणी इति। यामपरोक्षानुभूतिरिति उच्यते।

तदुक्तं यथा - ''**या स्मृतिरूपदर्शिता सा न तार्किकप्रसिद्धा, पूर्वमेतस्याननुभूतत्वात्, अपितु प्रतिभानापरपर्यायसाक्षात्कारस्वभावेयम्।**'' इति

(नाट्यशास्त्रे, ६, रससूत्रस्य अभिनवभारती)।

**राजशेखरस्य मतम्**

प्रतिभा मानवानामान्तरिकव्यक्तित्वस्य स्वाबाविकस्वरुपिणी। प्रतिभा एषा द्विप्रकारिका, कारयित्री भावयित्री भेदेन इति काव्यमीमांसायाम्। इयं प्रतिभा कविषु कारयित्रीरुपेण, सहृदयेषु च भावयित्रीरुपेण दृश्यते। अनया प्रतिभया कविः स्वकाव्यजगत् सृजति।

**भट्टतौतस्य मतम्**

श्रीभट्टतौतः कविः ऋषिः भवतीत्युक्तवान्। तद्यथा-

**नानृषिः कविरित्युक्तमृषिश्चकिल दर्शनात्।**
**विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम्।।**
**स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः।**
**दर्शनाद् वर्णनाच्चाथ रूढालोके कविश्रुतिः।।**
**तथा हि दर्शने स्वच्छे नित्येऽप्यादिकवेर्मुनेः।**
**नोदिता कविता लोके यावज्जाता न वर्णना।।** (काव्यकौतुकम्)

तस्य मतानुसारेण कविमध्ये प्रतिभायाः निवासोऽस्ति। एवञ्च प्रतिभायारुन्मेषो वर्णने भवति–

**प्रज्ञानवनवोन्मेषशालिनी प्रतिभा मता।**
**तदनुप्राणनाजीवद्वर्णना निपुणः कविः।।** (काव्यकौतुकम्)

**वामनस्य मतम्**

आचार्यवामनदेवस्य मतानुसारेण प्रतिभा कवित्वबीजं भवति। तां विना काव्यं हास्यास्पदं भवति। तेनोक्तं—

**कवित्वबीजं प्रतिभानम्। कवित्वस्य बीजं कवित्वबीजं। जन्मान्तर्गतसंस्कारविशेषः कश्चित्। यस्माद्विनाकाव्यं न निष्पद्यते, निष्पन्नं वा हास्यायतनं स्यात्'।** (काव्यालङ्कारसूत्रवृत्तिः - १.३.१६)

**भर्तृहरे मतम्**

प्रतिभा न मानवमात्रेषु वर्तते अपितु इयं सर्वप्राणिसाधारणी। अतः भर्तृहरिः वाक्यपदीये निगदति—

**प्रमाणत्वेन तां लोकः समनुपश्यति।**
**समारम्भाः प्रतीयन्ते तिरश्चामपि तद्वशात्।।**

(वाक्यपदीयम् २. १४७)

अयमाशयः प्रतिभां सकलसंसारः प्रमाणत्वेन अभ्युपगच्छति। यतः तया एव सर्वव्यवहाराणां प्रतीतिर्जायते। अपिच–

**यथा द्रव्यविशेषाणां परिपाकैरयत्नजाः।**
**मन्दादिशक्तयोः दृष्टाः प्रतिभास्त्वद्वतां तथा।।** (वाक्यपदीयम्-२.१४८)

अस्मात् ज्ञायते यत् प्रतिभा सहजतया विविधाः दृश्यन्ते इत्यर्थः।

**महाभाष्यकारस्य मतम्**

प्रतिभा परलोके विजयं प्रापयति इति पतञ्जलिमुनिः महाभाष्यस्य (१.१.१) पस्पशाहिनकस्य प्रयोजनाधिकारणे कथयति–

''**सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद्**'' इति।

**प्रतिभायाः भेदः**

वाक्यपदीयकारः भर्तृहरिः प्रतिभां षडधा व्यभजत्। तदुक्तं यथा-

''**स्वभावाचणाभ्यासयोगादृष्टापपादिताम्।**
**विशिष्टोपहितां चेति प्रतिभां षड्विधां विदुः।।**'' (वाक्यपदीयम्, २.१५२)

अर्थात् १- स्वभावजन्या प्रतिभा
२- आचरणजन्या प्रतिभा
३-अभ्यासजन्या प्रतिभा
४-योगजन्या प्रतिभा
५-पदार्थसम्बन्धजन्या प्रतिभा
६-समाधिजन्या प्रतिभा

राजशेखरनुसारं प्रतिभा द्विधा। यथा- कारयित्री भावयित्री च। कवेः या उपकारं प्रयच्छति सा कारयित्री। सा त्रिविधा। यथा -

१-सहजा -जन्मजातप्रतिभा।

२-आहार्या-शास्त्रकाव्यनिर्माणभ्यासादुत्पन्ना प्रतिभा।

३-औपदेशिकी-मन्त्रतन्त्रणामनुष्ठानेन देवेभ्य: गुरोपदेशेभ्यश्च प्राप्ता प्रतिभा।

**उपसंहार:**

प्रतिभा एव कविं काव्यनिर्माणार्थं प्रेरयति। यत: उच्यते-

**गुरुपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम्।**
**काव्यं तु जायते जातु कस्यचित्प्रतिभावत:।।** (काव्यालंकार. १.५)

प्रतिभा कवे: तृतीयनयनमित्युच्यते। यया त्रिकालद्रष्टा कवि: कल्पनाराज्ये विचरति। अत: महिमभट्टस्य व्यक्तिविवेके उक्तमस्ति-

**सा हि चक्षुर्भगवतस्तृतीयमिति गीयते।**
**येन साक्षात्करोत्येष भावांस्त्रैकाल्यवर्तिन:।।**

**सन्दर्भग्रन्थसूची**

१। आचार्य कपिलदेन द्विवेदी – संस्कृतनिवन्धशतकम्, विश्वविद्यालय प्रकाशन, वाराणसी - २०१०।

२- आचार्य शिवदत्त द्विवेदी-बृहत्संस्कृतशतकनिबन्धकलिका, भारतीयविद्याप्रकाशनम्, दिल्ली,२००८।

३- आचार्य पारसनाथ द्विवेदी - नाट्यशास्त्र का इतिहास, चौखम्बा सुरभारती प्रकाशन, वाराणसी, २०१२।

४- आचार्य: विश्वनाथकविराज: - साहित्यदर्पणम्, (व्या. शेषराजशर्मा, रेग्मी), चौखम्बा कृष्णदास अकाडमी, वाराणसी, २०१०।

५- आचार्य बलदेव उपाध्याय-संस्कृत साहित्य का इतिहास, शारदा निकेतन, वाराणसी, २००९।

६- अलंकारशास्त्रस्येतिहास: - डॉ. दगदीशचन्द्र मिश्र:, चौखम्बा सुरभारतीप्रकाशन, वाराणसी, १९८३।

७- काव्यप्रकाश: (मम्मटाचार्य:) - आचार्य विश्वेश्वर सिद्धान्तशिरोमणि, ज्ञानमण्डल लिमिटेड, वाराणसी, २०१०।

८- काव्यादर्श:-आचार्य श्रीरामचन्द्रभिश्र, चौखम्बा विद्याभवन, वाराणसी, १९९६।

Assistant Professor in Sanskrit
SailabalaWomens College
Cuttac, Odisha

## सोत्कर्षेऽपि रधोवंशे रामोऽभूत्स्वकुलाधिकः

दिल्लीप कुमार देवता

**क्षेमेन्द्रः -**

महाकवेः क्षेमेन्द्रस्य जीवनचरित सम्वन्धीस्पष्टवर्णनं यद्यापि कुत्राऽपि न लभ्यते, ततापि कवेः रचनासु अस्य जीवनं पृथक् न कृतं भवति। कवेः क्षेमेन्द्रस्य पूर्वजानां उपयुत्क परिचयेन स्पष्टं यत् – असो दनाट्य परिवारे लब्धजन्मासीत्। अतः अस्य पालन पोषणं अवश्यं हि राजकुमाराणामिव कृतं स्यात्। वैभवं, मानं, भाग्यं तथा ऐश्वर्यं मग्नस्य क्षेमेन्द्रस्य वाल्यजीवनं अतीव सुखपूर्णस्यात्। महाकविः आलङ्कारिकस्वायम् काश्मीरप्रदेशे एकादशशतके अजायत। क्षेमेन्द्रस्य ग्रन्थानां अति विस्मृतक्षेत्रात् स्पष्टं भवति यत् अस्य ज्ञानं अतीव उच्चम् तथा व्यापकमासीत्। असौ गणित, ज्योतिष, आयुर्वेद, राजनीतिसास्त्रम् इतिहासः अलङ्कारशास्त्रम् वौद्धदर्शनम् तथा तर्क शास्त्रादीनि काश्मीरप्रदेशे सकलाः विद्याः अधीतवान् गाथा साहित्य, भाष्यकाव्यम् तथा सङ्गीते अस्य रुचिरासीत्। यात्रा सम्वन्धी साहित्यमपि असौ अवश्यमपठत्।

**मुख्याविन्दवः**

अचार्यक्षेमेन्द्रस्य चारुचर्याकाव्यम् चौखम्भा-भारती अकादमीपक्षतः प्रकाशितायाः काव्यमालायाः द्वितीयगुच्छके प्रकाशितमस्ति। मानवस्य स्वभावम्, आचरणं सर्वोपरि जीवनं च शास्त्रानुकूलं कर्तुमत्र काव्ये विविधैः पौरानिकैः उदाहरणैः सह उपदेशाः प्रदत्तासन्ति। अनेन विरचिता चारुचर्या एकं खण्डकाव्यम्। अस्मिनकाव्ये साकल्येन अनुष्टुप्च्छन्दसा शतं श्लोका; सन्ति तेषु सप्तति श्लोक अत्र आलोच्य विषयस्य मुख्याशयः भवति।

स्वकुलान्यूनतां चेच्छेतुल्यः स्यादवाधिकः।
सोत्कर्षेऽपि रघोवंशेरामोऽभूत्स्वकुलाधिकः।।

**विषयावतरणम्ः**

स्वकुले न्यूनतां, तुल्याम् अधिक्यं वा इच्छेत्। सोऽत्कर्षेऽपि रघोः वंशे रामः स्वकूलाधिकः अभूत्। पवित्रता संपन्ने सूर्यवंशे रघुनाम प्रसिद्धः नरपतिः वभूव। असौ राज्ञः दिलीपस्य तनयः आसीत्। तस्य नामानुसारेण सुर्यवंशस्य नाम अपि रघुवंशः इति कत्यते। सः कुलशील दाक्षण्यादिभिः सर्वनृपगुणैः सर्वासां प्रजानां सेवनीयः आसीत्। तस्य शृंखलितशासनात् प्रजाः प्वर्तितात् नीतिमार्गात् धर्ममार्गात् च अणुमात्रं इतस्ततः नाभूवन्।

[1] १.चम्पूरामायणम् – वालकाण्डम्, २३
२. चम्पूरामायणम् – वालकाण्डम्, २७
३. चम्पूरामायणम् – वालकाण्डम्, २९

रघुराजः प्रजानां सुखवृद्धचर्थं ताभ्यः करं गृहीत्वा ततोऽपादिकेन यज्ञादिमार्गसेतु वापीकूपतडागादि निर्माणम् अकरोत्। दानशीलोऽसौ अर्थिभ्यः यथा-अभिलाक्षितम् वस्तुजातम् अयच्छत्, वरतन्तोः ऋषेः शिष्यः तस्मात् विद्याग्रहणम् अकरोत्। तस्य विद्याग्रहण समाप्त्यनन्तरं गुरुः वरतन्तुः अवदत् - "वत्स ! तव शिक्षाग्रहणं समाप्तम्। अधुना स्वगृहं गत्वा सांसारिकजीवनं निर्वासित।‰ गुरोः वचनं निसम्य कौत्सः अवदत् - "गुरो ! दक्षिणामदत्वा कथं गृहं यास्यामि ? गुरुः अवदत् — तव अकुण्ठिता शुश्रूषा एव अमूल्या गुरुदक्षिणा, अन्येन किम् ?‰ गुरोः एतत् वचनं श्रुत्वापि कौत्सः यदा दक्षिणा प्रदातुं अवदत् तदा क्रोधान्वितः गुरु कौत्सः अवदत् - "त्वचा मतः चतुर्द्धश विद्या अधीता, ततः चतुर्द्धश कोटिः स्वर्णमुद्रा मह्यं दीयताम्‰। गुरोः एतत् वचनं निशम्य किंकर्त्तव्यविमूढः शिष्यः कौत्सः राज्ञः दयालुस्वभावता, परोपकारिता गुणाः परिस्फुटा। तथापि तस्मिन् वंशे समुत्पन्नः रामचन्द्रः स्वकुलस्याधिकः अभवत्।

अयं प्रभुः श्रीरामचन्द्रः भगवतः बिष्णोः अंशावतारः भवति। महाराजः दशरथः पुत्रेष्टियज्ञं कारयितुं ऋष्यशृङ्ग नाम ऋषिपुङ्गवं स्व नगरमानयत्। यज्ञसमाप्ते, पायसमादाय राजा दशरथः -

कौशल्यायै प्रथममदिशद्धपतिः पायसार्धं
प्रादादर्धं प्रणयमधुरं केकयेन्द्रस्य पुत्र्यै।
एते देव्यौ तरलमनसः पत्युरालोच्य भावं
स्वार्धाशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम्।।

यज्ञोच्छिष्टहविः भोजनानन्तरं ज्येष्टाराज्ञी कौशल्या भववन्तं प्रभुं श्रीरामं पुत्ररूपेण लब्धुं गर्भमधत्त। यथा —

न्यग्रोधपत्रसमतां क्रमशः प्रयाता —
मङ्गीचकार पुनरप्युदरं कृसाङ्ग्याः।
जीवातवे दशमुखोरगपीडितानां
गर्भच्छलेन वसता प्रतमेन पुंसा।।

अनन्तरं शुभेमुहूर्त्ते प्रभु श्रीरामचन्द्रः राक्षसकुलं विनाशयितुम् शुभे मुहूर्त्ते भूपृष्टमवततार। तदुत्कम् चम्पूरामायणे–

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ न वम्यां तिथौ
ळाग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणे —
राविर्भूतमभूतपूर्वमपरं यात्किंचिदेकं महः।।

ग्रह पञ्चके उच्चस्थे सुरगुरौ चन्द्रमसायुत्के नवम्या तिथौ पुनर्वसु नक्षत्रयुत्के कर्कटके लग्ने सूर्ये मेषराशौस्थिते सकलाः राक्षस रुप काष्टानि भस्मसात् कर्तुं पवित्रात् अयोध्यानगररूप मन्थन काष्टा अद्वितीयं अभूतपूर्वं रामाभिधानं एकं तेजः आविर्भूतः वभूव।

असौ श्रीराम अनुजैः भरतलक्ष्यण शत्रुघ्नैः सह वाल्यसमयं अतिवाहितवान्। अनन्तरं गाधिसुत्रः विश्वामित्रः वने याज्ञनष्ट कारिणः राक्षसान् हन्तुं रामस्य साहाय्यार्थं अयोध्यानगरी मागच्छत्। सः राजानं दशरथं उवाच - "राजन्! भवतः तनयेन विनयाभिरामेण रामेण शरसन मित्रेण सौमित्रि मात्र परिजयेन क्रियमाण क्रतुरक्षो रक्षोदुरितमुत्तीर्य कृतावभृथो भवितुमभिलाषामिह्व। रामलक्ष्मणै आश्रमं नयन् ताभ्यां वलीत्यति वलेति च द्वे विद्ये अददात्। सः अकथयत् –

"वलेन तपसां लब्धे वलीत्यतिबलेति च
विद्येते मयि काकुत्स्थ विद्येते वितरामि थे।।

ततः गृहीत विद्यस्य दाशरथेः प्रदेशमेकं प्रदर्श्य भगवानित्वं अकथयत् –

अस्मिन्पुरा पुरभिदः परमेश्वरस्य
भालान्तरालनयनज्वलने मनोभूः।
सद्य प्रपद्य शलभत्वममुञ्चदङ्गः
तस्मादमुं जनपदं विदुरङ्ग संज्ञम्।।

तदनु मानससरः प्रसृगं सरयूमतिक्रम्य वृत्रवधप्रवृद्ध वृद्धश्रवः पक्ष क्षालन लब्धमलयोर्मलदकरुण नाम्नोः जनपदयोः सीम्नि कृतपदयोः दाशरथ्यो पुनरण्येवमव्रवीत् –

यक्षः सुकेतुर्द्रुहिणंप्रसादाल्लभे सुतांकामपि ताटकाख्याम्
सुन्दः किलैनां परिणीय तस्यां मारीचनीच जनयां वभूव।।

सुकेतुर्नाम यज्ञः व्रह्मवरप्रभावात् ताटकां नाम कन्यामलभत। सुन्दनामदैत्यः ताटकानाम्नीं तां परिणीय तस्यां क्षुद्रवृत्तिकं मारीचंनाम तनयम् उत्पादयामास।

अनन्तरं रामः ताटकावधारनन्तरं विश्वामित्रेण सह तस्य आश्रमं गत्वा तत्र यज्ञाविघ्नकारिणः राक्षसान् हतवान्। अनन्तरं प्रीतिमानाः विश्वामित्रः रामलक्ष्मणौ जनकस्य यज्ञभूमि मनयत्। पभि ऋषि अवदत् - "राम! इयं गौतम दर्मपत्नी अहल्या ऋषि शापात् पाषाण त्वंप्राप्ता, ताम् उद्धर रामः कृपया तस्याः उपरि पादस्थापनात् सा मुत्का सती स्वर्गगामिनी अभवत्। अनन्तरं विश्वामित्रेण सह तौभ्रातरो मितिलायाः जनकपुरीं प्रविष्टवन्तौ। तदा विश्वामित्रः तौ अव्रवीत् - "एकदा हलेन यज्ञभूमि परिष्कुर्वतः मिथिलाराज जनकस्य सौभाग्यात् रत्नगर्भाइयं वसुमती सी नाम कन्यारत्नम् अजनयत्। वंशस्यास्याः मिथिलायाः माहात्म्यं वर्णनीः मस्ति। यदत्र स्वयं भगवती सीता जन्म अग्रहीत्।ह्व

अनन्तरं राजर्षिः जनकः विश्वामित्र मव्रवीत् - "महर्षि! पुरः दृश्यमानमिदं धनुः अस्मद् वंशश्रेष्टाय राज्ञे देव राताय इन्द्र राज; प्रायच्छत्। अहमपि इदं धनुः सीता विवाहार्थं पणत्वेन स्थापितवान् जनके एवं कथयति गाधिसुतः विश्वामित्रः तद् धनुः नमनार्थं रामाय आदिष्टवान्। ततः –

वमे बाहुवलं विवृण्वति धनुर्वंशे गुणारोपणं
णा भूत्केवलमात्मना तिलकिते वंशोऽपि वैकर्तने।
आकृष्टं नितरां तदेव न परं सीतामनोऽपि द्रुतं

भङ्गस्तस्य न केवलं क्षितिभुजां दो: स्तम्भदम्भस्य च।।

जनकराजकन्यां सीतां परिणीय राम: पित्रादशरथेन सह अयोध्या प्रत्यागतवान्। महाराज: दशरथ: रामं युवराजपदे स्थापयितुम् ऐच्छत् तदा कैकेया सत्यापाशेन वद्ध: असौ तं वनवासार्थमादिश। राम: अनुजलक्ष्मणेन पत्न्या सीतया सह चतुर्दशवर्षाणि वनवासं कर्तुं गत्य दण्डकारण्ये न्यवसत्। तत्र लङ्काराज: रावण: सीतां अपहृतवान्। राम: वानरराज सुग्रिवेण सह मित्रतां सम्पाद्य वालिवधमकरोत्। अनन्तरं सुग्रीवस्य निर्देशन हनुमान् समुद्रं विलंध्य लङ्कापुरी गत्वा सीताया: अवस्थितिं विज्ञाय रामाय न्यवदेयत्। रामचन्द्र: वानरभल्लुकै: समुद्रे निर्माण वानर सेनाभि: सह लङ्कापुरी मगच्छत्। तत्र रामलक्ष्मणौ वहून् राक्षस सैन्यान् हतवन्तौ। अनन्तरं रावणेन सह रामस्य भीषण संग्राम: अभवत्। अनन्तरम् –

शास्त्रशास्त्रि समुत्सुकोऽपि दयितां संचिन्त्य पर्यकुला–
मस्त्रेण ज्वलता विधेरपुनरुन्मेषण तन्मस्तकान्।
ताम: कन्दलितान्मुहर्मुहरवच्छेदेऽपि लङ्कापते–
रातङ्केन समं समस्तजगतां चिच्छेद् सीतापति:।।

रावणस्य वधानन्तरं राम: तस्यानुजं विभीषणं सिंहासने अभिषिच्य सीता लक्ष्मणाभ्यां सह अयोध्यापुरीं प्रत्यागच्छत्। अनन्तरं भरतात् राज्यस्य शासनभारं गृहीत्वा प्रज्ञा: पुत्रवत् अपालयत्। अत: प्रज्ञा: सन्तुष्टा: अभवन्। परन्तु सीताया: लङ्कापुरे अवस्थानात् प्रजानां मनसि दु:खमजायत। अत: प्रजानुरञ्जक: राम: प्रजानां प्रीत्यर्थं पत्नीसीतां ऋषे: वाल्मीके: आश्रमे परित्यक्तवान्। अनुज: लक्ष्मण: यदा तस्मिन् आश्रमे सीतां परित्यज्य अयोध्यां प्रत्यागच्छत्, तदा सीताया: विलाप: वर्णित: रामायणे–

सा दु:खभारावनता यशस्विनी
यशोधरा नाथमपश्यती सती।
रुरोद सा बर्हिणनादिते वने
महास्वनं दु:खपरायणा सती।।

रामेण अश्वमेद यज्ञकरणा वसरे महर्षिणा वाल्मीकिना तस्य तनयाभ्यां लवकुसाभ्यां सह मिलनमकारयत्। सती सीतापि अयोध्यापुरी मागत्य प्रजानाम् असन्तुष्टभावं विज्ञाय पातलगामिनी अभवत्। अेनन प्रकारेण प्रभो: रामचन्द्रस्य क्लेशपूर्ण जीवनं व्यतीतम्। तथापि असौ जन्मन: आरम्य ऋषे विश्वामित्रस्य यज्ञरक्षणावसरे ताड़कारक्षसीम् अवधित। अभिशप्ताम् अहल्याम् उद्धृतवान्। सीतां परिणीय अयोध्यापुरीं आगच्छन् पर्शुरामस्य दर्पम् अचूर्णयत्। वनवासकाले वहून् दुष्टनिशाचरान् अहन्। लङ्काराजं रावणं निहत्य विभीषणीय सिंहासनमददात्। आत्मसुखं विस्मृत्य प्रजा: सुखेन अपालयत्।

**समस्या (Problem): -**

वने ताटकानाम्नीं राक्षसीम् अवधीत्। सीतां परिणीय यदा अयोध्यां प्रति प्रत्यागच्छत् तदा मार्गे पर्शुरामस्य दर्पम् अचूसत्यं पालयन् चतुर्द्धश वर्षाणि पत्न्या अनुजेन च सह निर्जनवने अवसत्। तदा लङ्काधिपतिः रावणः वनमध्यात् सीताम् अहरत्। सः राघवः वानर भल्लुकैः समुद्रे सेतुं निर्माण्य वनान्तात् वनितापहारिणं पुत्रपौत्रादि सहितं दशशिरं रावणं जघान। परिशेषे प्रजानां प्रीत्यर्थं पतिव्रतां स्वपत्नीं जानकीमपि तत्याज। एतेन सूर्यवंशीय राजसु श्रीरामचन्द्रः अभ्यधिकः गुणसम्पन्नः आसीत्।

**लक्ष्मम् उद्देश्यं च (Aims and objectives):**

श्रीरामचन्द्रः लोकप्रतिष्ठितमर्यादायाः सुरक्षायां समग्रजीवनं समर्पितवा मातुः कैकय्याः कूटवचनैः महाराजदशरथः यन्त्रितोऽभवत्तदा पितृसत्यपालनार्थ सः चतुर्दशवर्षरुपं वनवासमङ्गीकृतवान् सानन्देन। यद्यापि मातृकैकेयीवाक्ये श्रीरामः वनवासं कृतवान्तथापि मातृकैकेयीं प्रति तस्य मनसि काऽपि दुर्भावना नासीत्। यद्यापि लक्षणः तस्य सहानुगामी आसीत्तथापि भरतत्रुघ्नौ प्रति अविचला श्रद्धा आसीत्तस्य। अयोध्यां प्रति श्रीरामचन्द्रस्य पुनः प्रत्यागमनं भवतु इति मनसि निधाय यदा भरतः भ्रात्रा सह मिलितुमरण्यं आगतवान् आसीत्तदा लक्ष्मणस्तमन्यथा चिन्तिवान्, परन्तु श्रीरामचन्द्रस्य विश्वास्ः भरते तथैव सुदृढ़ आसीत्। अन्ततः पितृसत्यपालनार्थं चतुर्दशवर्षाणि यावत् भरतस्य राज्यभारं अर्पयित्वा आदर्शभ्रातृत्वस्य परिचयं दत्तवान् श्रीरामचन्द्रः

[2] १. चम्पूरामायणम् – वालकाण्डम्, २ ३

२. चम्पूरामायणम् – वालकाण्डम्, २७

३. चम्पूरामायणम् – वालकाण्डम्, २९

यद्यापि श्रीरामः राज्यशासनात्प्राक् वनवासं कृतवान्तथापि प्रजाभिः स आदृतः आसीत्। विशेषतः अयोध्यावासिनां मनोभावतः भरतस्य भ्रातृपेमतः च अनुमीयते यत् श्रीरामचन्द्रः प्रजानुरञ्जकः राजा आसीदिति।

भूमिभरिण मग्ना दशवदनमूखाशेषरक्षोगणानां
धृत्वा गोरुपमादौ दिविजमुनिजनैः साकमव्जासनस्य।
गत्वा लोकं रुदन्ती व्यसनमुपगतं ब्रह्मणे प्राह सर्वं
ब्रह्मा धात्वा मुहूर्तं सकलमपि हृदावेदशेषात्मकत्वात्।।

**उपसंहारः–**

महाकवि क्षेमेन्दस्य जीवन संयमित तथा नियमितमासीत्। अधिकांश समये असौ तथा सुशिक्षित जननांमध्ये अतिवाहितमकरोत्। अयं प्रायतः अरसिकः, नेयायिकः तार्किक शुष्कवेदपाठी तता वैयाकरणस्य दूरे आसीत्। तस्य न्याय, दान, त्याग, परोपकार, तथा उदाररूपच्य सर्वत्र अदृश्यन्ते। अवदानकल्पलतायाः परिमिति वर्णनायां कविः सरलता स्वाभिमान, उदारता निर्मलतादीनां

सद्गुणानां वर्णनं कृत्वा आत्मन स्वभावे दया, संयम, ज्ञान सन्तोष, तटस्यता, तप: जर्जस्वितादीनां परिचयमददात्। कवि: क्षमेन्द्र वेशभूषा तथा वार्त्तालापे अतीव सम्भ: प्रतीत भवति। धनिकस्य पितु: पुत्रत्वात् असौ कदाचिदपि योग्यलेखकान् उपहासमकरोत्।

**आधार पुस्तकम् (Base Book)**

१. दुर्गाप्रसाद, परव, काशीनाथपाण्डुरङ्ग च (सं), चारुचर्या काव्यमाला (द्वितीय गुच्छक),
२. भोजराकृत चम्पूरामायणम्
३. श्रीमद्वाल्मीकिरामायण उत्तरकाण्डम्

अध्यापक:
कलिङ्गभारती संस्कृत महाविद्यालय:
वालिचन्द्रपुरम्, याजपुरम्, ओडिशा

# साहित्यशास्त्रे रस-सिद्धन्तः

Rinku Guin

संस्कृत वाङ्मये वेदः अपौरुषेया कृतिः अस्ति। वेदतः नाट्यशास्त्रस्य आविर्भावः भरतमुनिनाकृतः। अतएव भरतमुनिः रससूत्रस्य प्रतिष्ठापकाचार्य रुपेण अभिधीयते। रससूत्रे विभाव- अनुभाव-व्यभिचारिभाव पदानां समन्वयमस्ति। अस्य सूत्रस्य व्याख्या भरतमुनिना न कृता। अपितु अन्यैः आचार्यैः विविध रुपेषु आलोचनात्मकपद्धत्या सविस्तरेण मीमांसाः कृता। अस्मात् कारणात् रससम्प्रदायस्य उद्भवः भवति। अयं रससम्प्रदायः भरतमुनेः आरभ्य पण्डितराज जगन्नाथः पर्यन्तं सम्यक् रुपेण प्रचलित। इतः परं अपि अनेके नवीनाचार्याः रससम्प्रदायं आलम्बनं कृत्वा साहित्यशास्त्रस्य नूतनान् ग्रन्थान् लिखन्ति। एते ग्रन्थाः उत्तराधुनिक संरचनावादयोगे अतिवमहत्त्वपूर्णाः। परन्तु रससम्प्रदायस्य उपजीव्यशास्त्रं नाट्यशास्त्रमेव अस्ति। संस्कृतसाहित्य काव्यजगति षट् सम्प्रदायाः वर्तन्ते। तत् यथाक्रमे-

| सम्प्रदायाः | प्रवर्तकः |
|---|---|
| १- रससम्प्रदायः | भरतमुनिः |
| २- गुणसम्प्रदायः | दण्डि |
| ३- अलङ्कारसम्प्रदायः | भामहादि |
| ४- रीतिसम्प्रदायः | वामनः |
| ५- ध्वनिसम्प्रदायः | आनन्दवर्धनः |
| ६- वक्रोक्तिसम्प्रदायः | कुन्तकः |

रसस्य स्वरूपम् - सम्प्रत्युपलभ्यमानो रससिद्धान्तो भरतेन प्रवर्तितः। परन्तु किं रसस्य स्वरूपम् तत् अत्र निरूपितम्। काव्यं हि आनन्दानुभूतिसाधनम्। आनन्दानुभूतिश्च रसास्वादमूला। रसास्वादनादेव आनन्दावाप्तिः। अतएव काव्यप्रयोजने मम्मटो "सद्यः परनिर्वृतये" इति व्याचष्टे-

सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादसमुद्गतं विगलितवेद्यान्तरम् आनन्दम्।१

विश्वनाथः साहित्यदर्पणे रसस्वरूपं प्रतिपादयति यद् रसो ब्रह्मास्वादसहोदरः -

वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥२

रसस्य आस्वाद्यत्वम् अनुभूतिविषयत्वं च मम्मटेन वर्ण्यतेः -

"पानकररसन्यायेन चर्व्यमाणः हृदयमिव प्रविशन् अन्यत्सर्वमिव तिरोदधत् ब्रह्मास्वादमिवानुभावयन् अलौकिकचमत्कारकारी श्रृङ्गारादिको रसः" । ३

तैत्तिरीयोपनिषदि " रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवति' ४ इत्यत्र ब्रह्मणो रसरूपत्वं तदवासौ च आनन्दोपलब्धिर्वर्ण्यते ।

नाट्यशास्त्रे भरतेन निर्दिश्यतेः -

" रस इति कः पदार्थः ? उच्यते - आस्वाद्यमानत्वात् । कथमास्वाद्यते रसः ? यथा हि नानाव्यञ्जन- संस्कृतमन्नं भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषा हर्षादींश्चाधिगच्छन्ति, तथा नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावान् आस्वादयन्ति सुमनसः प्रेक्षका हर्षादींश्चाधिगच्छन्ति" ।५

यथा नानाव्यञ्जनमिश्रम् अन्नं भुञ्जाना रसान् आस्वादयन्ति, तथैव नानाभावाभिव्यञ्जितान् स्थायिभावान् सहृदया आस्वादयन्ति, हर्षं चानुभवन्ति । रसभावयोश्च परस्परं पोषकत्वम् । न भावाहीनो रसः, न च रसहीनो भावः । एवं द्वावपि परस्परं भावयतः । ६ रसः सर्वेषां भावानां मूलं, यथा बीजं वृक्षपुष्पादेः ।७

भरतेन नाट्यशास्त्रे उच्यते- "नहि रसाद् ऋते कश्चिदर्थः प्रवर्तते" ।८ कथंरसनिष्पत्तिरिति जिज्ञासायां तेनोच्यते- विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः ।अत्र विभावाः कारणानि अनुभावाः कार्याणि व्यभिचारिणश्च सहकारिणः एषां संयोगात् रसस्य निष्पत्तिः । उक्तं च मम्मटेन-

कारणान्यथ कार्याणि सहकारीणि यानि च ।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः ॥
विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः ।
व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः ॥
(काव्य. ४.२७, २८)

अत्र संयोगशब्दं निष्पत्तिशब्दं चाश्रित्य विविधा वादाः प्रादुरभवन् । प्राधान्येन चत्वारो वादाः विविधदर्शनविद्भिः प्रतिपादिताः । तत्र १- भट्टलोल्लटेन मीमांसादर्शनम् आश्रित्य उत्पत्तिवादः २- शङ्कुकेन न्यायदर्शनमाश्रित्य अनुमितिवादः ३- भट्टनायकेन सांख्यदर्शनमाश्रित्य भुक्तिवादः ४- अभिनवगुप्तेन च वेदान्तदर्शनमाश्रित्य अभिव्यक्तिवादः प्रस्ताविताः । स रसः काव्यस्य आत्मा भवति । यथा- "रसो वै आत्मा काव्यस्य" ।९ अस्मिन् सन्दर्भे साहित्यदर्पणकारः विश्वनाथकविराजः कथयति साहित्यदर्पणे- "वाक्यं रसात्मकं काव्यम्" ।१० रससूत्रप्रसङ्गे भरतमुनिना उक्तं यथा- " विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः" ।११ स्थायीभावः रसत्वं प्राप्नोति,विभावानुभावव्यभिचारिभावसंसर्गात् । नाट्यशास्त्रस्य व्याख्याकारः अभिनवगुप्तः रसस्यास्वादनप्रक्रियां भिन्नरुपेण प्रतिपादयति । तेषामभिप्रायः भवति- तदा सः रसः सहृदयानां

मानसिकिभावनायां प्रतिफलनं भवति यदा अयं रसः आभिमुख्यसामुहिकसम्पन्नः भवति। सः रसः अलौकिकव्यापारात् काव्ये श्रेष्ठत्वं प्राप्नोति। अपि च अलौकिकव्यापारः भवति काव्ये व्यञ्जना इति। साधारण दृष्ट्या अयं रसः पृथक् भवति। अस्या आस्वादनं केवलमन्तः करणे भवति सहृदयस्य। इयं स्थितिः भवति सहृदयस्य चित्तिनिस्पन्दता इति। स्थलेऽस्मिन् अभिनवगुप्तः भट्टनायकादीनां सांख्यदर्शनदृष्ट्या रसास्वादनं काव्यमिति प्रमाणयन्ति।

परवत्तिनः आलङ्कारिकाः अभिनवगुप्तसम्प्रदायापेक्षया पृथक् युक्तिं स्थापयन्ति। यथा वेदान्तिनः कथयन्ति "आत्मा नित्यचैतनशीलः पूर्णानन्दमयः" इति यदा मानसिकीभावना अलौकिकीव्यापारत्वात् आत्मानुभूतिक्षेत्रे संश्लिष्टो भवति तदा आनन्दप्रदः आत्मानुभूतिर्जायते। यथा (रसास्वादक्षेत्रे) स्थायी भावः रतिशोकादयः यावत् पर्यन्तं स्थायीभावाः आवरणविहीनचैतन्यद्वारा प्रभ ाविता न भवति तावत् पर्यन्तं रसस्यआस्वादनं न सम्भवति। अस्मिन् प्रसङ्गे जगन्नाथपण्डितः तेषां युक्तिस्थापयति तैत्तरीयोपनिषदस्थ सुक्तिआधारीकृत्य-

" रसो वै रसः रसंह्येवायं लब्ध्वा आनन्दी भवति" ।१२ सः पुनरपि कथयति "रस प्रतीतिः नाम अपरोक्षप्रतीतिरिति" । १३

**नवरसविवेचनम्-** रसविषयकालोचनं भावविषयकालोचनञ्च भरतमुनिना तेषां नाट्यशास्त्रग्रन्थे षष्ठसप्तमोऽध्याये सम्यकतया प्रतिपादितमस्ति। इदानीमपि आलङ्कारिकाणां पृथक् पृथक् युक्तिः भवति रसविभाजने। केचन अष्टौ इति कथयन्ति अन्ये केचन नवरसाः इति प्रतिपादयन्ति। अष्टविधरसस्य युक्तिंक्षेत्रे भरतमुनिना युक्तं यथा-

श्रृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।
वीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः॥ १४

तेषां स्थायीभावादीनां प्रतिपादनक्षेत्रे भरतमुनिना उक्तमेव-

रतिर्हासश्च शोकश्च क्रोधोत्साहो भयं तथा
जगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥१५

महाकविः कालिदासः अपि अमुमाशयमाधारीकृत्य स्वनाटके विक्रमोर्वशीये कथयति-

मुनिनाभरतेन यः प्रयोगो भवतीष्वष्टरसाश्रयोनियुक्तः।
ललिताभिनयं तमद्यभर्ता मरुतां द्रष्टुमनाः सालोकपालः ॥१६

कविः वररुचिः तेषां उभयाभिसारिकाग्रन्थे रसाः अष्टविधाः इति लिखितवान्। यथा-

यस्यास्तावत् प्रथमं .......... त्रयो गीतवादितादिलया ।१७

अतः परवर्तिकालीननाट्यकाराः कालिदासादयः नाट्यशास्त्रस्य रससंख्याम् आधारीकृत्य अष्टविधः रसः इति उद्घोषितवन्तः। परन्तु केचन पुरातनमातृकाग्रन्थसहायेन नाट्यशास्त्रस्य टीकाकारः अभिनवगुप्तादयः शान्तरसमपि अङ्गीकुर्वन्ति। यत्र शम एव तस्य रसस्य स्थायीभावः इति। शान्तरसयोपरि सः कथयति यत्-

ये पुनर्नव रसाः इति पठन्ति तन्मते शान्तस्वरूपमभिधीयते ।१८

पण्डितराजजगन्नाथः रसगङ्गाधरे शान्तरसस्य माधुर्यश्रृङ्गार करुणरसस्योपरि प्रभाव विषये प्रतिपादयति। अमुं विचारं समर्थयति मम्मटाचार्यः काव्यप्रकाशे यत्-

करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।१९

मम्मटाचार्येण स्वीकृतं शान्तस्य नवरसत्वमिति विचारः कृतः पण्डितराजजगन्नाथेन उक्तं रसगङ्गाधरे यत्-

अत एव अष्टौ नाट्ये रसाः स्मृताः इत्युपक्रम्य शान्तोऽपि नवमोरसः इति मम्मटभट्टा अप्युपसंहार्षुः।अतः शान्तरसस्य नवरसत्वं स्वीकुर्वन्ति आलङ्कारिकाः यथा-

श्रृङ्गारहास्यकरुणा रौद्रवीरभयानकाः
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ।२०

अपि च एतेषां रसानां स्थायिभावाः यथा-

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा
जुगुप्सा विस्मयश्चेत्यमष्टौ प्रोक्ता शमोऽपि च ।२१

रससिद्धान्तः- "विभावानुभावव्यभिचारि संयोगाद्रसनिष्पत्तिः"।

भावशब्दस्य व्युत्पत्तिः- भावयन्ति इति भावाः। के नटाः नाट्यरसिकाः। किम् भावयन्ति इति नाट्य विचक्षणाः आङ्गिक- वाचिक- सात्विक- आहार्यः अभि नयेन सम्यक्तया अभिनयं कुर्वन्ति चेत् सुमनसाः नाट्यरसिकाः रसं आस्वादयन्ति अथवा मनसि भावयन्ति इति भावाः। भू इति करणे धातुस्तथा च भावितं वासितं कृतमित्यन् अर्थान्तरम् इति भावः ।

नाट्यशास्त्रस्य सप्तमोध्याये भरतमुनिः भावस्य लक्षणं प्रतिपादितवान्-

वागङ्गसत्वोपेतान् काव्ये अर्थान्भावयन्तीति भावा।

ह्यनेन गन्धेन रसेन वा सर्वमेव भावितम् इति भावः।

अत्र विभाव नाम- महर्षिः भरतमुनिः नाट्यशास्त्र ग्रन्थस्य सप्तमाध्याये विभावस्य लक्षणं उद्दवान्। "विभावो विज्ञानार्थः। विभावः कारणं निर्मित्तं हेतुश्च इति पर्यायः विभाव्यन्तेऽनेन वागङ्गसत्वाभिनया इत्यतो विभावाः। यथा विभावितं विज्ञातमित्यनर्थान्तरम्।"

वहवोऽर्था विभाव्यन्तो वागङ्गाभिनयाश्रयाः

अनेन यस्मात्तेनायं विभाव इति संज्ञितः ॥ नाट्य० ७.४

विभाव शब्दस्य अर्थ विज्ञान। अपि च विभावः कारणं निमित्तं एवं हेतुः इत्यादि पर्यायवावि शब्दाः सन्ति। अर्थात् एते सर्वे एकार्थे अन्तर्भवन्ति। वाचिक आङ्गिक एवं सात्विकाभिनयस्य विशेषज्ञानं कर्तुं यत् शक्यते तत् "विभाव" इति। वागादयोऽभिनया येषां स्थायिव्यभिचारिणां ते वागाद्यभिनय सहिता विभाव्यन्ते विशिष्टतयाज्ञायन्ते यद् ते विभावाः।

अनुभावः नाम- महर्षिः भरतमुनिः नाट्यशास्त्रग्रन्थस्य सप्तमाध्याये अनुभावस्य लक्षणं दत्तवान्।

अनुभाव्यतेऽनेन वागङ्गसत्वकृतोऽभिनय इति।

श्लोकोऽत्र- वागङ्गाभिनयेनेह यतस्त्वर्थोऽनुभाव्यते

शाखाङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः। नाट्य० ७.५

व्यभिचारिभावानां लक्षणम्- भरतमुनिः नाट्यशास्त्रे सप्तमाध्याये व्यभिचारिभावस्य वर्णनं कृतवान्। वि आभि इत्येतावुपसर्गौ। चर इति गत्यर्थो धातुः। विविधमभिमुखेन रसेषु चरन्तीति व्यभिचारिणः। वागङ्गसत्वोपेताः प्रयोगे रसान्नयन्तीति व्यभिचारिणः। अत्र कथं नयन्तीति भरतः वदति। लोकसिद्धान्त एषः यथा- सूर्य इदं दिनं नक्षत्रं वानयतीति। न च तेन बाहुभ्यां स्कन्धेन वा नीयते। किन्तु प्रसिद्धमेतत्। यथेदं सूर्यो नक्षत्रं दिनं वा नयतीति एवमेते व्यभिचारिण इत्यवगन्तव्याः।

त्रयस्त्रिंशत् व्यभिचारिणो भावाः-

निर्वेदग्लानि शङ्काख्यास्तथासूया मदः श्रमः।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिधृतिः।
व्रीडा चपलता हर्ष आवेगो जडता तथा।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ।
सुप्तं विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता।
मति व्याधिस्तथोन्मादस्तथा मरणमेव च।
त्रासश्चैव वितर्कश्च विज्ञेय व्यभिचारिणः।

त्रयस्त्रिंशदमी भावाः समाख्यातास्तुनामतः।

नाट्य० ६.१८-१९-२०

अत्र विभाव अनुभाव व्यभिचारिभावस्य व्याख्यानं दत्तं भरतेन परन्तु निष्पत्ति संयोग शब्दयोः स्पष्टं व्याख्यानं नाट्यशास्त्रे कुत्रापि द्रष्टुं न शक्यते। एवं रसस्य मूलं एव स्थायिभाव इति शब्दस्य प्रयोगः न कृतः । अतः नाट्यशास्त्रस्य अनन्तरं भिन्न मताः आविर्भूताः। तत्र चत्वारः व्याख्याविशेषाः प्रसिद्धाः ते यथा-

१- भट्टलोल्लटस्य - उत्पत्तिवादः
२- श्रीशङ्कुकस्य - अनुमितिवादः
३- भट्टनायकस्य - भूक्तिवादः
४- अभिनवगुप्तस्य - अभिव्यक्तिवादः

भट्टलोल्लटस्य उत्पत्तिवादः- भट्टलोल्लटस्य मतानुसारेण संयोग शब्दे एव स्थायिभाव इति अद्याहार्यः। सः पूर्वमीमांसाशास्त्र दृष्टया रससूत्रस्य उपरि व्याख्यानं कृतवान्। यथा उट्टं स्थायिभावः विभावयोः जन्यजनकभावः सम्बन्धः अस्ति। स्थायिभाव अनुभावयोः गम्यगमकभावः सम्बन्धः अस्ति। स्थायिभाव व्यभिचारि भावयोः पोष्यपोषकभावः सम्वन्धः वर्तते। अत्र विभाव अनुभाव व्यभिचारिभाव उत्पाद्याः किन्तु स्थायिभाव उत्पादकः तदर्थम् उत्पादकानां मध्ये आरोपं अपि द्रष्टुं शक्यते। अतः भट्टलोल्लटस्य वाद उत्पत्तिवादः आरोपवादः इति प्रसिद्धः। तस्य मतानुसारेण स्थायिभावः अनुकार्ये एव वर्तते। परन्तु अनुकर्तुः अपि भासते न पूर्णतया।

श्रीशङ्कुकस्य अनुमितिवादः- सामाजिकानां प्रयोजनं किम्? रसोत्पत्तिः कथं? सामाजिक अनुकर्त्रोः सम्बन्धः किदृशः? इमान् प्रश्नान् स्पष्टतया सन्देह रहितेन प्रतिपादितुं अशक्यम्। तदर्थ श्रीशङ्कुकः एतान् प्रश्नान् निवारयितुं प्रयत्नं करोति। एतत् सर्व अनुमिति वाद द्वारा कथयति। नैय्यायिक दार्शनिक दृष्टया अनुमितिवादं स्थापितुं इच्छति। तस्य मतानुसारेण निष्पत्ति शब्दस्य अनुमितिः इत्यर्थः। आचार्य लोल्लट उत्पत्तिवादे रसः अनुकार्येषु अनुकर्तृषु अपि द्रष्टुं शक्यते इति एवमेव उट्टवान्। श्री शङ्कुक मतानुसारं सम्यक्- मिथ्या- संशय-शादृश्य ज्ञानानां अपि वयं निर्णयं कर्तु न शक्नुमः। चित्र तुरगन्यायेन रसस्य उपरि अनुमितिवादं श्रीशङ्कुकः प्रतिपादयितुं इच्छति।

चित्रतुरग न्यायः- अत्र तुरगः अर्थात् अनुकार्य स्थायिभावः अस्ति। चित्र तुरगः अनुकर्त्रु दार्शनिकानां मध्ये स्थायिभावः अनुमीयते इत्यर्थः अभिनयानन्तरम् स्थायिभावः अनुमीयते। तदर्थ अनुमितिवादः इति प्रसिद्धः एवं तदर्थम् अपि निष्पत्तिः इत्युट्टे अनुमितिः इत्यर्थः।

भट्टनायकस्य भूक्तिवादः- सांख्यदृष्टया भट्टनायकः भूक्तिवादं प्रतिपादितुं इच्छति।

तस्य मतानुसारेण रसनिष्पत्तिः इत्युट्टे रसानुभवः इत्यर्थः। अत्र भट्टनायकः भट्टलोल्लटस्य उत्पत्तिवादं एवं श्रीशङ्कुकस्य अनुमितिवादं निरस्य खण्डितवान्।

भाव्यमाने रसोभोगेन परं भोज्यते न प्रतीयते।
नोत्पाद्यतेन विभज्यते काव्येन रसः॥

भुक्तिवादस्य अपरंनाम भोगः - भोजकः - भोजनः इत्यादयः। भावकत्व व्यापारेण भाव्यमाने रसो भुज्यते सामाजिकै। स्थायिभावानन्तरम् एव आस्वादन क्रिया आगछति। रत्यादिस्थायिभावः एवं विभावयोः मध्ये भोज्यभोजकसम्बन्धः वर्तते। अतः भूक्तिवादः इति प्रसिद्धः। भुक्ति इत्युक्ते आस्वादन क्रिया। अन्तिमतया सामाजिकैः एव रसस्वादनं भवति इति भट्टनायकः उक्तवान्।

अभिनवगुप्तस्य अभिव्यक्तिवादः- पूवक्त वादत्रयं समालोच्य परिशोध्य त्रय दोषाः सन्ति वा न इति विचारणं कृत्वा अभिनवगुप्तः स्वीयवादं उपस्थापितुं उत्सुकः भवति। अभिव्यक्तिवादस्य आरम्भे पूर्वविमर्शकानां कृतं गौरवं संसूच्य स्व स्य वादं मण्डयति। अभिनवगुप्ताचार्यस्तु सामाजिकस्य साक्षात् सम्बन्धं प्रतिपादितवान्। अत्र अभिव्यक्त इत्युक्ते प्रकटना स्थायिनां विभावादिभिः समम् स्ंयोगात् व्यङ्ग्यव्यञ्जक व़िरुपात् सम्बन्धात् विभावादीनाम् एव वा परस्परं संयोगात् रसस्य निष्पत्तिः इति सूत्रार्थः।

पुनः प्रश्नमत्र भवति- किं रसेभ्यो भावानाम् अभि निवृत्तिरुताहोवेभ्यो रसानामिति। रसभावयोः परस्पर सम्बन्धादेषामभि निर्वृत्तिरीति केषाञ्चिन्मतम्। अर्थात् रसात् भावः एवं भावेभ्यः रसस्य उत्पत्तिः इति। परन्तु एतत् न सत्यम् अत्र दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिर्न तु रसेभ्यो भावानामभिनिर्वृत्तिरिति। यथा उक्तं-

नानाभिनयसम्बन्धान्भावयन्ति रसानिमान्
यस्मात्तस्मादमी भावाविज्ञेया नाट्ययोत्कृभिः॥
नाना द्रव्यैर्बहुविधैर्व्यञ्जनं भाव्यते तथा।
एवं भावा भावयन्ति रसानभिनयैः सह॥
न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
परस्परकृता सिद्धिस्तथोरभिनये भवेत्॥
व्यञ्जनौषधि संयोगो यथान्नं स्वादुतां नयेत्।
एवं भावा रसाश्चैव भावयन्ति परस्परम्॥
यथा वीजाद्भवेद्वृक्षो वृक्षात्पुष्पं फलं तथा।
तथा मूलं रसाः सर्वेतेभ्यो भावा व्यवस्थिताः॥
नाट्य० ६-३४.३५.३६.३७.३८ ॥इति॥

पादटीका

१.काव्य,१.२

२. सा.द., ३.२.३

३.काव्यप्रकाश उल्लास,४

४. तैत्तिरीय,२.७

५.नाट्यशास्त्र,६.

६. नाट्यशास्त्र,६.३७

७. नाट्यशास्त्र, ६.३९

८.नाट्यशास्त्र,६.३२

९.नाट्यशास्त्रम्

१०. सा.द.,१.३

११. नाट्यशास्त्रम्,६पृ,२७९

१२.रसगङ्गाधरः

१३. रसगङ्गाधरः

१४.नाट्यशास्त्रम्,६.१६

१५. नाट्यशास्त्रम्,४.९८

१६. विक्रमोर्वशीयम्

१७. च्युतवाणी,पृ.१३

१८.Gackword oriental service,vol.1,p.333

१९. काव्यप्रकाशः, ८.४८

२०.सा.द.,३.१८२

२१.सा.द.,३.१७५

परिशीलितग्रन्थाः

१ ॥नाट्यशास्त्रम्- डाँ० भवभूति शर्मा, डाँ० हरिदत्त शास्त्री साहित्य भण्डार सुभाष बाजार मेरठ

२ ॥साहित्यदर्पणम्- आचार्य शेषराजशर्मा रेग्मी चौखम्वा कृष्णदास अकादमी-२००६

३ ॥संस्कृतसाहित्येतिहासः- वलदेव उपाध्याय शारदा निकेतन ५बी वाराणसी

४ ॥संस्कृतसाहित्येतिहासः- आचार्य लोकमणि दाहालः चौखम्वा कृष्णदास अकादमी वाराणसी

५ ॥नाट्यलक्षणरत्नकोशः- सागरनन्दी प्रणीतः प्रभा हिन्दी व्याख्योपेत चौखम्वा संस्कृतसिरीज वाराणसी १९७२ ई०

६ ॥काव्यप्रकाशः- डाँ० गजाननशास्त्री चौखम्वा संस्कृतसीरीज् वाराणसी-१९९७

७ ॥ध्वन्यालोकः- डाँ० गङ्गासागर राय चौखम्वा संस्कृतसीरीज् वाराणसी-१९९७

८ ॥नाट्यशास्त्र का इतिहास- डाँ० पारसनाथ द्विवेदी चौखम्वा कृष्णदास अकादमी वाराणसी

SSD College,
Gurudijhatia
Cuttach,Odisha

## रूपक अलङ्कारस्य वर्गीकरणम्

Subhrajyoti Sitaram

अलङ्कारा: काव्यस्य शोभाधायका:। प्रतिभाव्युत्पन्न: कवि: यदा स्वकीयं काव्यं सृजति तदा चमत्कारिता स्वत: आगच्छति। अलङ्कारा: स्वत: प्रस्फुटिता: भवति। अलङ्काराणां साहित्ये महत्वपूर्णस्थानं दृश्यते काव्यसौन्दर्यस्य उत्कर्षविधायकतत्वं भवति अलङ्कारा:। अलं करोति इति अलङ्कारा: इति अस्य व्युत्पत्ति: विश्वनाथाचार्येण अस्य स्वरूपविषये लिरिवतम्

शब्दार्थयोरस्थिरा ये धर्मा: शोभातिशायिन:।
रसादीनुपकुर्वन्तेऽलङ्कारास्तेऽङ्गदादिवत्।।[१]

अर्थात् लोके देहिनां शरीरावयवेषु परिहिता: अङ्गदादय: (कटक- कुण्डल - कङ्कणादय:) शरीरशोभां वर्धयन् आत्मन: शरीरिणाम् उत्कर्षतां प्रतिपादयन्ति तथैव शब्दार्थशरीरस्य काव्यस्योपमाद्य: अलङ्कारा:शब्दार्थ अलंकृत्वा काव्यस्य आत्मभूतस्य रसस्य उत्कर्षतां प्रतिपादयन्ति।

रूपक अलङ्कारस्य सामान्य अवधारणा भेदप्रभेदमुपरि प्रमुखरूपेण त्रिधा विभक्तम्।

१। प्रथमं तु आचर्या: आगच्छन्ति ये रूपकस्य भेदप्रभेदान् प्रति किञ्चिदपि न लिखितवन्त:। केवलं रूपक लक्षणम् एवं लक्षणम् एवं लक्षणगत उदाहरेणन स्वमन्तव्यं प्रतिष्टापनं कृतवन्त:।

२। द्वितीयवर्गे एते आचार्या: आगच्छन्ति ये रूपकस्य भेदप्रभेदं प्रति किञ्चित् कृतवान्।

३। तृतीयवर्गे एते अलङ्काराचार्या: अगच्छन्ति ये रूपकस्य सविस्तरं निरूपणे प्रमुखरूपेण प्राधान्यम् अवधारयन्ति।

यतो हि रूपकस्य वर्गीकरणं सर्वप्रथमं 'अग्निपुराणे' प्राप्यन्ते। परन्तु 'अग्निपुराणे' रूपकस्य भेदानां वर्णनं नाऽस्ति। रूपकस्य उदाहरणमपि तत्र न प्राप्यति। अग्निपुराणस्य रूपकप्रसङ्ग सर्वाधिक उपेक्षितमस्ति। 'अग्निपुराणे' रूपकं सादृश्यस्य प्रतिरूपं मन्यते। 'अग्निपुराणे' रूपकस्य स्वरूपं सम्यक् रूपेण अवगन्तुं न शक्यते। अग्निपुराणानन्तरम् आचार्य भरतेन साङ्गरूपक रूपेण रूपकस्य चर्चा कृता। तदनन्तरम् आचार्य भामहद्वारेण रूपकस्य द्वयं कृतम्। समस्त वस्तुविषयकमेकदेशविवर्त्ति च।

भामह अनन्तरम् आचार्य दण्डिना रूपकचक्रस्य सविस्तरेण काव्यदर्शस्य द्वितीय परिच्छेदे वर्णनं कृतम्। तेन रूपकानां लक्षणम् एतेन प्रकरेण दत्तम्।

**उपमैव तिरोभूतभेदारूपकमुच्यते।**
**यथा बाहुलता पाणिपद्मं चरणपलव:[२]।।**

दण्डिनानुसारेण रूपकस्य अनेकभेदा: सन्ति। एकोनविंशति: भेदावर्णनं ते स्व काव्यदर्श: कृतम्। उद्भट महाभागेन रूपकस्य भेदं चतुर्धा कृतम्।

उद्भटानन्तरं रूद्रट: रूपकस्य निरूपणम् उपमाया: आधारे कृतवान्। स: सर्वप्रथमं रूपकस्य

भेद द्वयं कृतवान्। वाक्यरूपकं समासरूपकं चेति। तदनन्तरं समासरूपकस्य भेदत्रयं कृतवान्। सावयव - निरवयव- संकीर्णं चेति । सावयव रूपकस्य भेदद्वयं वर्त्तते । निरवयव रूपकस्य च भेदद्वयं वर्त्तते। ते क्रमशं समानमेव सन्ति। समस्तवस्तुविषयं एकदेशीयरूपकं च। सावयवरूपकस्य सहज आहार्य उभयं च एते भेदानि सन्ति। निरमेव रूपकस्य भेद चतुष्टयं भवति। शुद्ध- माला- रशाना-परम्परितं च। एतेषां वर्णनं रेखाचित्रेण सुस्पष्टं भवति।

**रूद्रटानुसारेण रूपक- वर्गीकरणम्-**

अत्रावधेयमस्ति यत् रुद्रटस्य उपरि भामहस्य प्रभाव: वर्त्तते। समानरूपकं वाक्यरूपकं च वर्णनप्रसङ्गे दण्डिन: प्रभाव: दृश्यते। रुद्रटानन्तरं मम्मटार्येण काव्यप्रकाश विरचितम्। काव्यप्रकाशे रूपकस्य भेदोपभेदानां सविस्तरेण वर्णनमस्ति। सर्वप्रथमे मम्मटेन रुपकस्य त्रिधा विभत्कम्।

क) साङ्गरूपकस्य-

समस्तवस्तुविषयम्-''समस्तवस्तुविषयं श्रोताआरोपिता यदा'' (मम्मद, काव्यप्रकाश) मधुमतीकारौभट्टाचार्यौरूत्कम्-'अङ्गमारोपकारणम्' तेन साकं वर्त्तते इति साङ्गम्। यदा आरोप्यमाणा: सर्वे शब्देन उच्यते तदा साङ्गरूपकस्य समस्तवस्तुविषय भेद: वर्त्तते यथा–

ज्योत्स्नाभस्मच्छुरणधवला विभ्रती तारकास्थी-
न्यन्तर्द्धानव्यसनरसिका रात्रिकापालिकीयम्।
द्वीपाद्वीपं भ्रमति दधती चन्द्रमुद्रां कपाले
न्यस्त सिद्वाञ्जनपरिमलं लाञ्छनस्य च्छलेन [३]।।

अत्र श्लोके रात्रौ कापालिकीत्वारोपेण ज्योत्स्नायां भस्मन: तारकासु अस्थि समूहानां चन्द्रे कपालस्य चारोपणं भवति। एतेषामारोप्यमाणानां सर्वत्र शव्दोपात्तत्वयोगेन अत्र समस्तवस्तु विषयरुपकालङ्कार:।

एकदेशाविवर्त्तिरुपकम्- 'श्रोता आर्थाश्च ते यस्मिन्नकदेशविवर्त्ती तत्'। यत्र एकादेशे आरोप्यमाणा:शब्दोपात्त: भवति, अन्यत्र पूर्वापवलात् आरोप्यमाणा: अर्थोपात्त: भवन्ति, तत्र एकादेशे रूपकस्य विवर्त्तनात् एकदेशविवर्न्ति भवति। यथा-

**यस्य रणान्त: पुरे करे कुर्वतो मण्डलाग्रलनाम्**
**रससमुसव्यपि सहसा पराङ्मुरवी भवति रिपुसेना[४]।।**

अत्र श्लोके रणे अनत: पुरस्यारोपणं शब्दोपात्तम्। मण्डलाग्रे नायिकाया: रिपुसेनायां प्रतिनायिकाया आरेपणं न शब्दोपात्ताम्। परन्तु रणे अनत: पुरस्य आरोपवलत् अस्मिन् अर्थवशेन स्वत: आरोपणं भवति, केवलं रणे अनत: पुरस्य आरोपयोगेन एकादेशविवर्त्तनात् एकदेशविवर्त्तनात् एकदेशविवर्त्तिरूपकम्।

**ख) निरङ्गरूपकम्-**

निरङ्गरूपकं तत्र भवति यत्राशे स्वल्पम् आरोप - विषयत्वेन प्रदीयते। अत्र अङ्गमल्पमिति कृता निरङ्गम्। निरङ्गरुपकं शुद्धं मालारूपश्चेति द्विविघम्।

**शुद्धनिरङ्गम्-**

**कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्**
**सखी कान्तोदत्तं श्रुतमपि पुनः प्रश्नयति यत्।**
**अनिद्रं यच्चान्तः स्वपिति तदही वेद्म्यभिनवां**
**प्रवृत्तोस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम्।।**[५]

**मालानिरङ्गम्-**

माला तु पूर्ववत् अर्थात् मालोपमावत्। यथा - मालोपमायत् एकस्योपमेयस्य बहुपमानसम्बन्धः तथा अत्रापि एकस्मिन् उपमेये बहुपमानानामारोपः।

यथा- सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षेद्गमः
कान्तेः कार्मणकर्मनर्मरहसामुल्लासना वासभुः।
विद्या वक्रगिरां विधेरनवधि प्रावीण्यसात्क्रिया
बाणाः पञ्चशिलीमुखस्य ललनाचुडामणिः सा प्रिया।।[६]

अत्र एकत्र उपमेय- प्रियारुपे तरङ्गिणी, हर्षीदूगमः, कार्मणकर्म इति समेषाम् आरोपणात् मालानिरङ्गरूपकम्।

**ग) परम्परित रूपकम्-**

**नियतारोपाणोपायः स्यादारोपःपरस्य यः**
**तत् परम्परितं श्लिष्टे वाचके भेदभाजि वा।।**[७]

निश्चितरूपेण् यत् आरोपणं तन्निमितं यदि अन्यत्र आन्यारोपः भवति तर्हि तत् परम्परित रूपकम्। अयमत्र निर्गलितोऽर्थः यत्- यदि कुत्रन्विद् वर्णयितुं येग्यं यदारोपणं यद्यदि अन्यारोपं प्रति कारणं भवति तर्हि तत्र परम्परित रूपकम्। (परम्परा + इतच्) परम्पतित रूपकं श्लिष्टाश्लिष्टभेदेन द्विविघं सत् केवलत्व मालारुपत्व योगेन चतुर्विघं भवति। अर्थात् प्रथमतःपरम्परिरूपकं श्लिष्टमालारूपम् अश्लिष्टरूपश्चेति द्विविधाम्। पुनः एतद् द्वयं श्लिष्टमालारुपं केवलम् आश्लिष्ट मालारूपकेवलेति मिलित्वा साकल्येन चतुविर्धम्।

**परम्परितस्य श्लिष्टमालारूपकम्**

**विद्वन्मानस! हंसवैरिकमलासङ्गोचदीप्तद्युते!**
**दुर्गामार्गण नीललोहितं समित्स्वीकारवैश्वानर!**
**सत्यप्रीतिविघानदक्ष! विजयप्राग्भावभीम! प्रभो!**
**साम्राज्यं वरवीर वत्सरशनं वैरिञ्चमुच्चैः क्रियाः।।**[८]

अत्र विदुषां मानसमेव मानसरोवरः इति आरोपणं भवति अर्थात् पण्डितानां मानसे मानसरोवरस्य

आरोपणं भवति । एतत् आरोपणं राज्ञिं हंसारोपणं न सम्भवेत्। अत्र परम्परित-श्लिष्ट-मालारूपकम्।

**परम्परितस्य अश्लिष्टमालारूपकम्-**

**आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः**
**पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः।**
**संग्रामामृतसागरप्रमथन क्रीडाविधौ मन्दरः**
**राजन् राजति वीरवैरि वनितावैधव्यदस्ते भुजः।।**[९]

श्लोकेऽस्मिन् जयकुञ्जरयोः पृथगुपादानात् न मानसादिपदवत् श्लिष्टत्वम्। एकस्मिन् भुजे आलानस्य सेतोः पुर्वाद्रिः उपाधानस्य च आरोपणात् मालारूपकम्। अपि च भुजे आलानस्यारोपणं प्रति जये कुञ्जरस्यारोपः निमित्तम् इति कृत्वा परम्परितस्य अश्लिष्टमालारूपम्।

**परम्परितस्य केवलं श्लिष्टमालारूपकम्-**

**अलौकिकं महालोकप्रकाशितजगत्त्रयः।**
**स्तूयते देन सद् वंशमुत्कारत्नं न कैर्भवान्।।**[१०]

उदाहरणेऽस्मिन् आरोपविषयारोपाश्रययोः सत्कुलवेण्वोः श्लिष्टपदाभिनात् श्लिष्टत्वम्।

**परम्परितस्य केवलम् अश्लिष्टमालारूपकम्-**

**निरवधि च निराश्रयं च यस्य स्थितमनिवार्त्तितकौतुकप्रपञ्चम्।**
**प्रथम इह भवान् स कुर्ममूर्त्तिर्जयति चतुर्द्दशलोकवल्लिकन्दः।।**

श्लोकेऽत्र लोकवल्लिपदयोः पृथक् कथनात् अश्लिष्टत्वम्। लोके वल्लित्वस्य आरोपणं विष्णौ कन्दत्वारेपणं प्रति कारणमिति कृत्वा परम्परितस्य केवलम् अश्लिष्टरूपकम्।

साहित्यदर्पणाकारः विश्वनाथेनऽपि रूपकस्य सविस्तरेण चर्चा कृतः। इममुपरि मम्मट रुटयकयोः पर्याप्तप्रभावः। सर्वप्रथमं विश्वनाथेन रूपकस्य द्रेत्रयं कृतम्। परम्परितं साङ्गं निरङ्गं च। तदनन्तरं परम्परितं भेदद्वयं स्यात्। श्लिष्टशब्दनिवन्धनं- आश्लिष्टशब्दनिवन्धनं श्च।

विश्वनाथानन्तरं जयदेवः कृत चन्द्रालोके ग्रन्थे रूपकस्य विभाजनं प्राप्यते। अस्मिन् ग्रन्थे रूपकस्य भेदाः चतुष्टयमस्ति । सोपाधिरूपकं सादृश्यरूपकं रोपितरूपकं च।

पादटीका

१। साहित्यदर्पणम्।

२। काव्यादर्शः २।६६

३। काव्यप्रकाशः।१० म उल्लासः।

४। काव्यप्रकाश: १०।४२३

५। काव्यप्रकाश:।१० म उल्लास।

६। काव्यप्रकाश:।१० म उल्लास:।

७। काव्यप्रकाश:।१०।४२५

८। काव्यप्रकाश:।१० म उल्लास:।

९। काव्यप्रकाश:।१०।४२३

१०।काव्यप्रकाश:।१० म उल्लास:।

**ग्रन्थानां सूची**


१। कव्यप्रकाश: मम्मट: आचार्य विश्वेश्वर सिद्धान्तशिरोमणि, ज्ञानमण्डल लिमिटेड, वाराणासी २०१०।

२। काव्यादर्श:। आचार्य: श्रीरामचन्द्रमिश्र:, चौखम्वा विद्याभवन, वारणासी १९१६।

३। काव्यालङ्कार:। पं रामदेव शुक्ल।

४। साहित्यदर्पणम् (लक्ष्मीटीका) कृष्णमोहन शास्त्री, चौखम्वा संस्कृतसिरिज्।



*DEPT. OF SANSKRIT*
*Meghasan Mahavidyalay,*
*Odisha*

# संस्कृतसाहित्ये चम्पूकाव्यानुशीलनम्

Nibedita Samal

## संस्कृतवाङ्मयस्य वैशिष्ट्यम्

" संस्कृतं नाम दैवी वाक् अन्वाख्याता महर्षिभिः" इति हि संस्कृतं महीयते । भारतीयदर्शनसंस्कृतीनां भाषा संस्कृतभाषा आर्यभाषाणां जननी आर्येतरभाषाणां पोषिका च वर्तते । प्राचीनतमेयं भाषा सर्वाभ्यः भाषाभ्यः गरीयसी । सर्वासां भाषाणां जननी च वर्तते । अस्याः संस्कृतभाषायाः वाङ्मये चतुर्दशविद्याः, इतिहासद्वयं, साहित्यशास्त्रम् आधुनिकसंस्कृतकृतयश्च समाह्रियन्ते । तत्र अधोदर्शितश्लोकद्वारा चतुदर्शविद्यास्तावत् ज्ञायन्ते ।

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥ इति ।

वैदिकवाङ्मयं वा शास्त्रीयवाङ्मयं वा लौकिकं साहित्यं वा यदि पठामः अवश्यं मानवस्य हितं भवति । तथा च कथितं - शिवेतरक्षतये इति काव्यस्य प्रयोजनमुपपादयता मम्मटेन । स च काव्येन हितं जायते इति उपपादयामास । काव्यं नाम शब्दार्थौ सहितौ काव्यम् । सहितयोः शब्दार्थयोः भाव एव साहित्यम् । तत् सर्वत्र वेदकालात् अद्य यावत् वाङ्मये समन्वितं भवति । परं वेदादि शास्त्रेभ्यः काव्यस्य किं वैलक्षिण्यमिति चेत् अत्र तु साहित्यं रसभरितं भवति । तदेव अत्र हितम् ।

## काव्यशब्दस्य व्युत्पत्तिः

काव्यशब्दस्य व्युत्पत्तिः कवयः इत्थमकुर्वन् यत् कौति इति कविः तस्य कर्म भावो वा काव्यम् । अर्थात् कविः यत् करोति तदेव काव्यं भवति परन्तु इदानीं प्रश्न आयाति यत् अवगाहानन्तरं वस्त्रप्रक्षालनं करोति तच्च काव्यं भवति वा ? तत्र। व्युत्पत्या यदेव स्वलेखन्यग्रे प्रकाशयति तदेव काव्यपदवाच्यं जायते ¯। अर्थात् कविः यदेव स्वलेखन्यग्रे प्रकाशयति तदेव काव्यमिति वक्तुं शक्यते । इत्थमेव काव्यशब्दस्य व्युत्पत्तिः प्रदर्शिता।

## काव्यविभागः

सामान्यतया काव्यानि त्रिविधानि । पदगद्योभययात्मकतया । तदेव लक्षणिकैः एवमुक्तम् गद्यं पद्यञ्च मिश्रञ्च काव्यादि त्रिविधं स्मृतम् इत्यग्निपुराणकारेण प्रतिपादितम् । अत्र गद्यकाव्यं केवलं गद्यमयम् । पद्यकाव्यं केवलं पद्यमयम् ।

तृतीयन्तु गद्यपद्योभयात्मकम् । अस्यैव चम्पूकाव्यमिति नाम । उभयोः गद्यपद्ययोः मिश्रणं यत्र भवति तत् चम्पूकाव्यमिति कवीनामभिप्रायः।

**चम्पूशब्दस्य व्युत्पत्तिः**

चुरादिगण चपि धातोः[१] उ प्रत्यययोगेन चम्पयति, चम्पति इति वा चम्पूः इति चम्पूशब्दस्य व्युत्पत्तिः कथ्यते । चपि धातोः गमनम्, ज्ञानप्राप्तिः, मोक्षः इति च अर्थाः भवन्ति। अतः चम्पूशब्दस्य आनन्दप्राप्तिदायिका चम्पू इति वक्तुं शक्यते । हरिदासभट्टाचार्याः- चमत्कृत्य पुनाति सहृदयान् विस्मयीकृत्य प्रसादयति इति चम्पूः इति चम्पूशब्दस्य व्याख्यानं कृतवन्तः।[२] अन्ये चम्पूशब्दं संस्कृत पदं न किन्तु द्राविडपदभवमित्यवदन् । तच्च सम्पू इति कन्नड पदस्य रूपान्तरमित्यवदन्। सम्पू पदस्य मेलनं, मनोहरं इत्याद्यर्थास्सन्ति। गद्यपद्यमिश्रित काव्यानां सम्पूकाव्यानीति तदेव संस्कृते चम्पूकाव्यतया प्रसिद्धमित्यवदन् । दाक्षिणात्या दण्डी एव प्रथमतया चम्पूकाव्यभेदं संस्कृते प्राकटयत् इति वक्तुं युक्तं भवति । अत एव प्राचीनमातृकासु गद्यपद्यमिश्रितं काव्यं सम्पू, चम्पू, पदाभ्याम् अभि धीयते । ततः क्रमेण "चम्पू" पदं संस्कृते प्रचुरतया प्रयुक्तम् ।

**चम्पूकाव्यस्य लक्षणम्**

पद्यगत सरसता गद्यगत गम्भीरता च चम्पूशैल्यां द्रष्टुं शक्यते । एवञ्च गद्यपद्योभयगत सुगुणतायुता चम्पूरचनेति वक्तुं परयामः । वेदकालादारभ्य चम्पूरचनाया आविष्कारोऽभवत् । चम्पूकाव्यस्य लक्षणम् अनेकैः काव्यशास्त्रस्याचार्यैः कृतम् । तेषु दण्डिना काव्यादर्शे चम्पूकाव्यस्य लक्षणविषये एवं प्रतिपादितम्-

मिश्राणि नाटकादीनि तेषामन्यत्र विस्तरः।
गद्यपद्यमयी काचिच्चम्पूरित्यभिधीयते ॥[३] इति ।

एवं दण्डिनः अनुसारं गद्यपद्यमिश्रितानि नाटकादीनि काव्यानि चम्पूकाव्यानि सन्ति । आचार्यहेमचन्द्रः वाग्भटश्च चम्पूकाव्यस्य लक्षणं एवं कृतम् -

गद्यपद्यमयी साङ्का सोच्छ्वासा चम्पूः।[४] इति ॥
मिश्रं चम्पूरिति ख्यातम् ॥[५] इत्युक्तम् ॥

इति केचन वदन्ति । काव्यं गद्यपद्यमिश्रभेदेन त्रिधा विभक्तं भवति । चम्पूः नाम मिश्रकाव्यं भवति। भोजः स्वकीय सरस्वतीकण्ठाभरणे गद्यं पद्यं च मिश्रं च काव्यं यत् सा गतिः स्मृतिः । एतद् अनुसृत्यैव वाग्भटेन चम्पूकाव्यलक्षणमुक्तम्।

तच्च गद्यपद्यमिश्रभेदैः त्रिधा चम्पूकाव्यलेखनार्थं कवेः काचित् अतिशयशक्तिरावश्यकी । केवलं पद्यलेखने वा गद्यलेखने वा एतादृशशक्तिः न लक्षिता। परन्तु उभयस्यापि मेलने तादृशी शक्तिः लक्षिता एव ।

**चम्पूकाव्यस्य प्रशस्तिः**

गद्यानुबन्ध रस मिश्रित पद्य सूक्तिः
हृद्यापि वाद्यकलया कलितेव गीतिः।
तस्मात् दधातु कविमार्गजुषां सुखाय
चम्पूप्रबन्धरचनां रसना मदीया ॥[६]

वाद्येन सह गीतिः यथा सुखाय भवति, तथा गद्यपद्यमिश्रितं चम्पूकाव्यं रसास्वादं भवतीति अत्र भोजराजेन प्रोक्तम् ।

गद्यावलीपद्यपरम्परा च प्रत्येकमत्यावहति प्रमोदम् ।
हर्षप्रकर्षं तनुते मिलित्वा द्राग्बाल्यतारुण्यवतीव प्रमोदम् ॥[७]

इति जीवन्धरचम्पूकाव्ये हरिचन्द्रः चम्पूकाव्यस्य समादरणीयतां प्रकटयति । अस्मायं गद्यमयं पद्यमयं वा काव्यं प्रमोदम् अतीव जनयति अस्माकम् , तथापि तदेव मिलित्वा हर्ष प्रकर्ष जनयति यथा बाल्यं तारुण्यं इत्येतद् द्वयं भरमाणा कन्या आनन्दपरम्परां जनयति इति ।

अत एव नलचम्पूकाव्ये त्रिविक्रमभट्टः कथयति-

उदात्तनायकोपेता गुणवद्वृत्तमौलिका ।
चम्पूश्च हारयष्टिश्च केन न क्रियते हृदि ॥[८]

**चम्पूविभजनम्**

यथा पद्यकाव्यानि सर्गेषु विभक्तानि तथैव चम्पूकाव्यानि तु सामान्यतया अङ्करुपेण अथवा उच्छ्वासरुपेण विभक्तानि भवन्ति । तस्मात् आश्वासः, उल्लासः, काण्डः, तरङ्गः, सर्गः, विलासः, लम्बकः, कल्लोलः, मनोरथः, बिन्दुः, परिच्छेदः, इति नामभिः चम्पूकाव्यानि विभक्तान्यवलोक्यन्ते । कुत्रचित् विभजनं विनापि चम्पूकाव्यानि रचितानि सन्ति । येन केनापि विभागेन रहितान्यपि "स्वाहासुधाकर" चम्पूप्रभृतीनि विलोक्यन्ते । केषुचित् वर्ण्यविषयानुरोधं विभागो दृश्यते विश्वगुणादर्शादिषु। यथा- भूलोक वर्णनम्, अयोध्यावर्णनम्, काञ्चीवर्णनम्, काशीवर्णनम् इत्यादि ।

**इतिवृत्तम्** - चम्पूकाव्यानाम् आश्रयणीयेतिवृत्तविषये कवीनाम् अभिप्रायभेदः नास्ति । पौराणिकवृत्तान्तं, रामायणमहाभारताश्रितकथां, राज्ञां चरितम्,

ऐतिहासिकट्टटनां, भगवतः उत्सवादिकं च इतिवृत्तत्वेन स्वीकृत्य कविभिः चम्पूनिर्माणम् अकारि ।

**वर्णनम् -** वर्णनविषयेऽपि कवयः पद्यकाव्यानि महाकाव्यानि इव नगर, शैल, ऋतु, महार्णवादिवर्णनं समाश्रितवन्तः। यथाप्रसङ्गम् अर्थचमत्कृतिं शब्दचमत्कृतिं तदुभयं वा अवलम्ब्य कवयः सम्यक् वर्णनमकार्षुः । बहुषु चम्पूकाव्येषु पौराणिकस्थलविशेषवर्णनं, तादृशतीर्थस्थानानां वर्णनं च उपलभ्यते ।

**रसः -** पद्यकाव्यानि (महाकाव्यानि) इव चम्पूकाव्येषु अपि शृङ्गार, वीर, शान्तरसानाम् एव अङ्गिरसत्वं भवति । अन्ये रसाः अङ्गरुपेण आस्वाद्यन्ते । भगवद्भक्तिविषयकचम्पूकाव्येषु तु भक्तेः भगवतः महिमविशेषस्यापि प्राधान्यं दत्तमस्ति ।

## संस्कृते साहित्ये चम्पूकाव्यानां वर्गीकरणम्

काव्यस्य उत्पत्तिः साधारणतया बीजमेव प्रधानं भवति नामबीजं विनावृक्षः नोत्पद्यते एवमेव काव्यानां वा भवतु नाटकानां वा भवतु बीजमेव प्रथानं तादृशी चम्पूकाव्यानां कथमिति तेषां स्थानं कृतेति विचारयाम ।

१ आदिकाव्य रामायणाधारित चम्पूकाव्यानि - 20
२ महाभारताधारित - चम्पूकाव्यानि - 27
३ भागवताधारित चम्पूकाव्यानि - 38
४ विभिन्नपुराणाधारित चम्पूकाव्यानि - 32

➢ तत्र सामान्यतः -

- देवीभागवताधारित चम्पूकाव्यानि - 2
- नृसिंहपुराणाधारित चम्पूकाव्यानि - 1
- ब्रह्मपुराणाधारित चम्पूकाव्यानि- 2
- ब्रह्माण्डपुराणाधारित चम्पूकाव्यानि - 1
- स्कन्दपुराणाधारित चम्पूकाव्यानि -1
- शिवपुराणाधारित चम्पूकाव्यानि - 14
- मार्कण्डेपुराणाधारित चम्पूकाव्यानि - 3
- जैनपुराणाश्रितचम्पूकाव्यानि -5

५ तन्त्राधारितम् चम्पूकाव्यानि -1
६ चारित्रकाधारित चम्पूकाव्यानि - 13
७ ऐतिहासिकाधारेण चम्पूकाव्यानि - 23
८ यात्रा प्रबन्धात्मकाधार चम्पूकाव्यानि -8

९ काल्पनिककथाधारेण चम्पूकाव्यानि - 5

**चम्पूकव्योत्पत्तिः विकासश्च**

चम्पूकाव्य प्रक्रियायाः आविर्भावः वेदकाले एव आविर्भूता दृश्यते । प्रथमतः ऋग्वेद सम्बन्धि ऐतरेयब्राह्मणे हरिश्चन्द्रोपाख्यानं गद्यपद्यमिश्रित चम्पूमार्गे विरचितम्। तथैव कृष्णयजुर्वेदेपि तैत्तिरीय मेत्रायणि कठसंहितासु च गद्य पद्य मिश्र रचना दृश्यते । अथर्ववेदे अपि तत्र तत्र गद्यशैली उपयुक्ता । तथैव प्रश्न, मुण्डक, कठोपनिषदत्सु चम्पूपद्धतिः दृश्यते । कठोपनिषदि यमनचिकेत संवादः गद्यपद्यात्मक चम्पूपद्धत्यां वर्णितम् । तथैव महाभारतादिकाव्येषु भागवतादि पुराणेषु च रचना यद्यपि पद्यात्मिका तथापि तत्र तत्र गद्यरचना स्थानं भजत्येव । तथैव रुपकेषु गद्यपद्यात्मिका समानरचना दृश्यते ।

बौद्धकथासाहित्यमपि अधिकतया चम्पूशैल्यां ग्राथिता वर्तते । एवमेव पञ्चतन्त्रकथासु च । चम्पूशैल्याः परिणतस्वरूपः क्रीस्तोरनन्तरं ३०५ प्रान्ते समुद्रगुप्तस्य अलहाबाद् शासने दृश्यते । अस्याः रचयिता हरिसेणः । चतुर्थशताब्द्यामस्याः विकसित काव्यस्वरूपः दृश्यते । लब्धाधारानुश्रुत्य क्रीस्तोरनन्तरं दशमशताब्दादारभ्य चम्पूशैल्यां काव्यरचनाआरब्धेतिज्ञायते । क्रीस्तोरनन्तरं दशमशताब्द समयस्यैव संस्कृतेऽनिकानि महाकाव्यानि, नाटकानिगद्यकाव्यानि च विरचितानि । भास, कालिदास, भवभूति, शूद्रक, भारवि, माट्ट, बाण, दण्ड्यादि महाकवीनाञ्चोद्भवोप्यभवत् । पद्यगद्यरचनानन्तरं चम्पूरचनायां कवीनामादरः अधिको बभुव। दक्षिणापथे वैष्णवसाहित्यकाराः तथैव जैनकवयः तेलुगु, तमिल, कन्नड, मलयाल कवयोऽपि चम्पूशैलीमेवाधारीकृत्य स्वस्व ग्रन्थानरचयन् । तिक्कनाद्या अपि महाभारत अनुवादे चम्पूशैलीमनुश्रुतवन्तौ ।

अपि च दक्षिणापथे हरिकथा, बुर्रकथादयोपि अस्मिन्नेव शैल्यां विरचिताः कथिताश्च । अतएव दक्षिणात्यानां चम्पूरचनातीव प्रीतिकारिणी बभूव । दाक्षिणात्याः बहवः कवयः इमं पद्धतिमनुश्रुत्य संस्कृतेऽपि चम्पूकाव्यानधिकतयाऽरचयन् । अतएव चम्पूकाव्यानामाधिक्यता दक्षिणापथे एव दृश्यते। डा चविनाथत्रिपाठी महोदयः स्वस्य चम्पूकाव्यका आलोचनात्मक एकं एतिहासिक अध्ययन ग्रन्थ संस्कृते चम्पूकाव्यानां संख्या २४५ इति, तत्रापि १९९ काव्यानि दक्षिणभारते एव लिखितानीति च प्रत्यपादयत् । चम्पूकाय कर्तुषु त्रिविक्रमभट्टः भोजः लक्ष्मणसूरिः अनन्तभट्टादयः प्रसिद्धाः दृश्यन्ते ।

काव्यस्य प्राचीनलाक्षणिकमतानुसारेण गद्यं, पद्यमिति द्विविधौ भेदो दृश्यते। तत्र गद्य, पद्यमिश्रितं उभयात्मकञ्च चम्पूकाव्यमिति दण्ड्यादिभिः तल्लक्षणं

प्रोक्तम् । तत्र महाकाव्यस्य लक्षणप्रसङ्गे नायक, इतिवृत्त, रस, वर्णन, देशकालाद्यवस्थाभेदेन ये च नियमाः प्रोक्ताः चम्पूकाव्ये प्रायशः तेषां आचारः स्वैरेण कविमनोभावेन प्रवर्तते इत्यत्र न संशयः ।

**Footnotes**

[1] चपि गत्याम् सिद्धान्तकौमुदी धातुसङ्ख्या- १६२० पृ , ४१९

[2] न्यायकुसुमाञ्जलिः

[3] काव्यादर्श- १. ३१

[4] काव्यानुशासनम्- ८, पृ,३४०

[5] अग्नि- ३२६.३

[6] च.रा.श्लो.३ पृ,४

[7] जी.च.-१-६

[8] प्रथमोद्योतःश्लो-२५

**सहायक ग्रन्थ सूची**

१ अग्निपुराणम् - आचार्यः श्री बलदेवोपाध्यायः, चौखाम्बा संस्कृत संस्थान, वारणासी , १९९८

२ संस्कृतसाहित्येतिहासः - आचार्य लोकमणिदाहलः, कृष्णदास अकाडमी,वारणासी, १९९३

३ संस्कृतसाहित्येतिहासः - सीतारामचतुर्वेदी, चौखाम्बा विद्याभवन्, वारणासी, १९६७

४ संस्कृतसाहित्येतिहासः - आचार्य हंसराज अग्रवाल , चौखाम्बा सुरभारती प्रकाशनम्, वारणासी, २००९

५ चम्पूकाव्यका आलोचनात्मक- एवम् ऐतिहासिक अध्ययनम्, डा. चविनाथत्रिपाठि, चौखाम्बा विद्याभवन्, वारणासी, १९५६

6 studies on campu literature- C.R. Deshpande, Bharatiya vidyprakasa, delhi, 1970

7 History of Sanskrit poetics- p.v. kane , motial Sanskrit Banarasidas, delhi, 1971

**Lecturer in Sanskrit**
**Odisha**

# अलङ्कारशास्त्रे शब्दार्थसम्बन्धमीमांसा

श्रीमन्तच्याटार्जी

''द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परञ्च तद्।
शब्दब्रह्मणि निष्णात:परं ब्रह्माधिगच्छति।।''
(महाभारत,शान्तपर्वणि-२३२.२०)

इति स्मार्तवचनादेव ज्ञायते शब्दब्रह्मैव जगत्मूलम्। इह खलु संसारे मनुष्याणां स्वाभिप्रायप्रकटनं यद्यपि संकेतेनापि सम्भव्यते, यथा मूकादिभिरनुष्ठीयते, तथापि यादृशं प्रकटनं शब्दप्रयोगेण स्यान्न तथा अन्येन केनाप्युपायेन भवितुमर्हति। निरुत्तकञ्च निरुक्तग्रन्थे निरुक्तकृता यास्केन-

'व्याप्तिमत्त्वात्तु शब्दस्याणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके इति (निरुत्तकम् १।२।५)। दण्डिनापि निगदितम्-

'इदमन्धं तम: कृत्स्नं जायने भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं दीप्यते।।' इति (काव्यादर्श:-१।४)

अनेन दण्डिना काव्यादर्शे दर्शितं यत् शब्ददीपेन दीप्यते अखिलमिदं जगन्। शब्दज्योतिर्विना कृत्स्नोऽपि लोकोऽन्धकाराय सम्पद्यते इति निश्चप्रचम्।

इत्थं स्वाभिप्रायप्रकटनार्थं भाषाज्ञानं सुतरामपेक्षत इत्याशय:। क:शब्द ? का भाषा ? इति जिज्ञासायां वत्तुं शक्यते यत्र ग्राहयग्राहकयो: सम्बन्ध: समस्ति स शब्द:। यत्र चोभयोरभावो वर्तते सा भाषा। भाषाया: परिशुद्धज्ञानलाभाय व्याकरणमपरिहार्यम्। एतदेवाभिप्रेत्य भर्तृहरिणा भणितम्-

'अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम्।
तत्त्वावबोध: शब्दानां नास्ति व्याकरणादृते।' इति (ब्र० का०, कारिका१३)
'तद्द्वारमपवर्गस्य वाङ्मालानां चिकित्सितम्।
पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते।।' इति (ब्र० का० कारिका १४)

भरतेन नाट्यशास्त्रे वाज:प्रशंसैवं विहिता-

'वाङमयानीह शास्त्राणि वाङ्निष्ठानि तथैव च।
तस्माद्वाच: परं नास्ति वाग्धि सर्वस्य कारणम्।।' इत्ति

दण्डिनापि वैयाकरणानां प्राशास्त्यं प्रतिपादयता प्रतिपादितम्-

'इश शिष्टानुशिष्टानां शिष्टानामपि सर्वथा।
वाचामेव प्रसादेन लोकयात्रा प्रवर्तते।।' इति। (काव्यादर्श:,१।३)

अत: भाषाया स्वरूपज्ञानाय व्यवहाराय तद्रक्षयै अग्रे शव्दज्ञानमत्यावश्यकम्। हाव्दज्ञान विना

भाषाया व्यवहारो भवितुं नार्हति।भाषा खल्वस्माकं व्यवहारिकी सम्पत्तिः। विना भाषां परस्परं व्यवहारः कर्तुं न।शक्यते। अतः वक्तु शक्यते यद् भाषाज्ञानं शव्दज्ञानपूर्वकमेव सम्भाव्यते। शव्दज्ञानञ्च व्याकरणज्ञानमन्तरा न सम्भबति ।तथा। चोक्तं-

'व्याकरणत् पदसिद्धिः पदसिद्धेरर्थनिर्णयो भवति।

अर्थत्तत्त्वज्ञानं तत्त्वज्ञानत् परं श्रेयः।।'इति

(सिद्धहेमचन्द्रानुशासनस्य प्रथमाध्यायः,पृ०७)

शाव्दोऽयं साध्वसाधुभेदेन द्विविधः। एवं द्विविधे शब्दभेदे समुत्पन्ने साधुशब्दप्रयोग एव शास्त्रीयलौकिभयदृष्टया प्रशस्तः। महाभाष्येऽपि तत्रभवता भाष्याकारेण भाषित् यत्-

'एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुत्त्कः स्वर्गे लोके च कामधुग् भवति'। इति

(पात० म० भा०६।१।८४)

महाभाष्ये पस्पशायामपि भाष्यकारेण भाष्यते यत्-

'यस्तु प्रयुङ्त्त्के कुशलो विशेषे शब्दान् यथावद् व्यवहारकाले।

सोऽनन्तमाप्नोति जयं परत्र वाग्योगविद् दुष्यति चापशब्दैः।।'इति

शब्दवाङाये के शब्दाः साधवः ? के च असाधव ? कथञ्चः तेषां साधुताऽसाधुता सर्वं ज्ञानं व्याकरणाद् भवति। विना व्याकरणज्ञानं सर्वमेतद् निर्णेतुं न शक्यते।

वाक्यपदीये भगवता भर्तृहरिणा ध्वनितं-

'साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।

अविच्छेदेन शिष्टानामिदं स्मृतिनिबन्धनम्।।' इति (ब्र० का० १४)

शब्दानां साधुता पाणिन्यादीनां शिष्टप्रयोगे निहिता समस्ति। अस्मिन् शोधे काव्यशास्त्रे शब्दार्थसम्बन्धमीमांसा विहिताऽस्ति।

शब्दश्रवणे अर्थबोधो जायत इति तु सर्वजनविदितम्। शब्दार्थयोः सर्वदैव नित्यसम्बन्धो वर्तति। महार्षिण जैमिनिना मीमांसासूत्रे सूत्रितम्-'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति। (शाबरभाष्यम्-१।१।५)

सूत्रस्थितस्य 'औत्पत्तिक' शब्दस्य नित्यार्थः कृतः शबरस्वमिना।

तेन शाबरभाष्ये भाषितम्-'औत्पत्तिक इति नित्यं ब्रूमः। उत्पत्तिर्हि भाव उच्यते लक्षणया। अवियुत्त्कः शब्दार्थयोभर्वः सम्बन्धो नोत्पन्नयोः पश्चात् सम्बन्धः' इति (शाबरभाष्यम्-१।१। ५)। महाकविना कालिजासेन रघुवंशस्य प्रथमे श्लोके ''वागर्थाविव सम्पृत्त्कौ'' इत्यादिना शब्दार्थयोः नित्यसम्बन्धः स्वीकृतः।

शब्दश्रवणात् यदर्थबोध आयाति तदेव अर्थबोधं प्रति हि कारणम् शब्दकारणात् जायमानं कर्यमेन वृत्तिरित्यभिधया अभिधीयते आचार्यैः। अर्थात् शब्दो हि येन व्यापारेण स्वीयमति सा वृत्तिः। अभिधा-लक्षणा-व्यञ्जना- तात्पर्यभेदेन वृत्तिः चतुर्विधा। एतासु वृत्तिषु अभिधया सर्वेषामर्थानां

निर्णीतत्वात् पृथक्तया लक्षणाया आवश्यकता नास्ति इति नु मुकुलभट्टादीनां केषाञ्चन आचार्याणां मतन्।अनेन आचार्येण तदीये 'अभिधावृत्तिमातृका' इति शीर्षके ग्रन्थे लक्षणा अभिधायां परिगणिता-इत्युक्तम्।

प्रथितयशसा पण्डितेन महिमभट्टेन केवला अभिधावृत्ति ऊरीकृता। तस्य मते-अभिधातिरिक्तस्थले यदर्थ उपलभ्यते, तत्तु अनुमानेनायाति।

आलङ्कारिकेष्वपि वृत्तेः प्रकारभेदविषये वैमत्यं दरीदृश्यते। आचार्येण धनिकेन 'काव्यनिर्णयः' इति तदीये ग्रन्थे व्यञ्जनावृत्तिः नाङ्गीकृता । तस्य मते अभिधालक्षणाव्यतिरिक्ता ये खलु रसाद्यर्थाः सन्ति, तात्पर्यवृत्त्या तेषामर्थबोधो जायते।

आनन्दवर्द्धनादिभिरालङ्कारिकैः तात्पर्यवृत्तिः नादृता। तेषां मते विरतासु अभिधाद्यर्थसु व्यञ्जनया सर्वे अर्थाः प्रतीयन्ते। सम्मटविश्वनाथादयः आचार्याः वृत्तेः चतुर्विधत्वमङ्गीकृतवन्तः।

'अभिधा-तात्पर्य-लक्षणात्मक-व्यापारत्रयातिवर्ती ध्वननादिव्यापारोऽनपह्नवनीय एवं इति। (काव्यप्रकाशः, पञ्चमोल्लासः)।

<u>**अभिधा**</u>:- काव्यप्रकाशस्य द्वितीयोल्लासे आचार्यमम्मटः शब्दशक्तिनिरुपणावसरे अभिधाशक्तिं निरूपयति-

'स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते।' (काव्यप्रकाशे द्वितीयोल्लासे कारिका-४)

वाचकशब्देन यस्य मुख्यार्थस्य साक्षात् सङ्केतितार्थस्य वाच्यार्थस्य वा अर्थप्रतीतिः भवति, स शब्दव्यापारस्तु 'अभिधा' इत्युच्यते।

सङ्केतग्रहणमाध्यमेन मुख्यार्थबोधो भवति। एतेषां चत्वारः भेदाः उक्ताः-'' सङ्केतीतश्चतुर्भेदो जात्यादिर्जातिरेव वा।''(काव्यप्रकाशः ४ पृष्ठा)

नामक्रियाजानिगुणेष सङ्केतग्रहणमाध्यमेन मुख्यार्थबोधो जायते।

तत्र मुख्यार्थबोधिका शक्तिरेव 'अभिधे'त्युच्यते।

विश्वनार्थन साहित्यदर्पणे शब्दितं -'तत्र संकेतितार्थस्य बोधनादग्रिमाऽभिधा'इति

(तत्रैव कारिका-७)

आलङ्कारिकेण भामहेन तदीये 'काव्यालङ्कारः' इति ग्रार्न्थ सङ्केतग्रहणस्य क्षेत्रानुसारं जात्यादिभेदेन शब्दस्य चतुर्विधत्वमङ्गीकृतम्। तस्याभिप्रायो हि केषाञ्चन मते उक्तचर्तुर्विधातिरिक्तः 'यदृच्छाशब्दः' इत्याख्यः शब्दस्य अपरः प्रकारभेदः अस्ति, यथा डित्थादिशब्दः।

'दव्यक्रियाजातिगुणभेदात्ते च चतुर्विधाः।
यदृच्छाशब्दमप्यन्ये डित्थादि प्रतिजानीने।।' इति

(काव्यालङ्कारः, षष्ठपरिच्छेदः, कारिका-२१)

व्यक्तिविवेककारः महिमभट्टोऽपि जात्यादिभेदेन शब्दस्य चर्तुर्विधत्वं स्वीकृतवान्। तस्य स्वाभिप्रायः खलु केषाञ्चित् नये त्रियायामपि सङ्केतः भवति।

तेन ध्वनितं-

'तान्यपि बहुप्रकाराणि सम्भवन्ति जातिगुणक्रियाद्रव्याणां तत्प्रवृत्तिनिमित्तानां बहुत्वात्।'इति (व्यक्तिविवेकः, प्रथमविमर्शः)

साहित्यदर्पणकृतः विश्वनाथस्य मतेऽपि जातिगुणद्रव्यक्रियासु सङ्केतो गृहयते-
'सङ्केतो गृहयते जातौ गुणद्रव्यक्रियासु च।' (इति कारिका)

**लक्षणा :-**

मुख्यार्थबाधे सति मुख्यार्थसम्बन्धार्थप्रतीतिःयत्र भवति तत्र लक्षणा स्यात्। काव्यप्रकाशे प्रकाशितं मम्मटेन-

''मुख्यार्थबाधे तधुक्तो ययान्योऽर्थः प्रतीयते।
रूढेः प्रयोजनाद्वासौ लक्षणा शाक्तिरर्पिता।' इति
(साहित्यदर्पणम्, द्वि० परि० कारिका-५)

यथा 'गङ्गायां घोषः' इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृते असम्भवन् स्वस्य सामीप्यादिसम्बन्धसम्बान्धनं तटादिं बोधयति सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम।

लक्षणा तु रूढितः प्रयोजनवशाद्वा भवितुमर्हति। 'कर्मणि कुशलः' इत्यत्र रूढिलक्षण भवति। यतो हि कुशलः इत्यस्य 'रक्ष' इत्यर्थो रूढत्वात्। 'गङ्गायां घोषः' इत्यत्र गङ्गायां शैत्यपावनत्वादिगुणानां घोषे विद्यमानप्रयोजनत्वात् तत्र प्रयोजनवती लक्षणा विद्यते।

लक्षणायाः प्रकारभेदस्य वैसादृश्यं लक्ष्यते आचार्येषु। मम्मटादीनाम् आचार्याणां मते लक्षणायाः षट् मौलिकभेदा वर्तन्ते। तेषां प्रत्येकं पुनः अव्यङ्गागूढव्यङ्गाऽगूढव्यङ्गाभेदेन त्रिधा विभक्तत्वात् साकल्येन अष्टादश भागैः विभज्यते लक्षणा। -

'लक्षणा तेन षड्विधा।
व्यङ्गेन रहिता रूढौ, सहिता तु प्रयोजने।
तच्च गूढमगूढं वा।' इति। (का० प्र०, द्वि० उ०, कारिका-१)

मम्मटेन अव्यङ्गागूढव्यङ्गभेदेन यल्लक्षणा विभज्यते तत्त दोषदष्टा। कारणं हि केवलं लक्षणा अव्यएया भवति। गूढव्यङ्ग्यस्थले ध्वनिः सगूढव्यङ्ग्यस्थले पश्चन कश्चिदलङ्गारो भवति। अगूढव्यङ्ग्यस्थले - गुणीभूतव्यङ्ग्यं स्वीकृत्य अ्यावान्तरविभागोऽपि तेन प्रदर्शितः।

आलङ्गारिकाणां मते अनवयानुपपत्तिर्हि लक्षणावीजम्। यत् पदानां सङ्गतः अन्वयो नायाति, तत्र पदानाम् अन्वयलाभार्थं लक्षणा स्वीकरणीया। शाब्दिकनये तु लक्षणा पदेषु भवति। तस्मात् तन्मते तात्पर्यानुपपत्तिर्हि लक्षणाबीजम्। लक्षणाबीजम् अन्वयानुपपत्तिः अङ्गीक्रियेत चेत्तर्हि 'गङ्गायां घोषः' इत्यत्र अन्वयलाभार्थं घोषपदे मकरादौ लक्षणा भवति, यदेवानिष्टं भवेत्। तस्मात् तात्पर्यं नाम वक्तिच्क्षैव लक्षणाबीजम्।

जयदेवेन तदीये चन्द्रालोके प्रपञ्चितं-शब्दे, पदार्थे, वाक्यार्थे, सङ्ख्यायां, कारके, लिङ्गे च लक्षणा गृहीता भवति -

'शब्दे पदार्थे वाक्यार्थे सङ्ख्यायां कारके तथा।

लिङ्गे चेयमलङ्काराङ्कुरबीजतया स्थिता।' (चन्द्रालोक:, नवममयूख:, कारिका - १६)

लक्षणा कुत्र कुत्र स्यादिति जिज्ञासायां चोच्यते नागेशेन परमलघुमञ्जूषायां -

'तात्स्थ्यात्तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च।

तत्साहचर्यात्तादर्थ्याज्ज्ञेया वै लक्षणा बुधै:।।' इति (कारिका - ३०)

केवलं शव्देषु लक्ष्यार्थो गृहीत:, न तु वाक्ये इति सर्वेषामभिमतम्। परन्तु मीमांसका वाक्येऽपि लक्ष्यार्थ: गृहीतो भवतीति ऊरीकुर्वन्ति। मतमिदं बहुधा खण्डितं नैयायिकै:।

मीमांसकमते यथा 'गभीरायां नद्यां घोष:' इत्यत्र वाक्यार्थप्रतिपादनादनन्तरं लक्षणा प्रविष्टा। तस्मात् अत्र लक्षणा वाक्यगता।

नैयायिकै: मतमिदं न समर्थितम्। तैरुक्तं यत् प्रोक्तस्थले नदीपदमेव लक्ष्यार्थेन नाभीरनद्या: तीरं बोधयति। गभीरशब्द: केवलं तात्पर्यग्राहक:। वाक्ये तु शक्तेरभावाच्छक्यसम्बन्धरूपालक्षणापि नास्ति। यत्र 'गभीरायां नद्यां घोष:' इत्युक्तं तत्र नदीपदस्य नदीतीरे लक्षणा इति। (सिद्धान्तमुक्तावली)

आलङ्कारिकेषु विश्वनाथादय: केचन लक्षणाया: वाक्यगतत्वमङ्गीकुर्वन्ति। वैयाकरणै: समासस्य शाक्ति: स्वीकृता। समासस्य वाक्यत्वमपि स्वीकृतत्वाच्च वैयाकरणा अपि वाक्येषु लक्षणाया: स्वीकर्तार:।

**व्यञ्जना :-**

किस्वरूपा व्यञ्जना ? इति पृच्छायां निगद्यते काव्यप्रकाशे मम्मटेन -

'अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते।

संयोगाद्यैरवाच्यार्थकृद् व्यापृतिरञ्जनम्।' इति (का० प्र०, द्वि० उ०, कारिका-१४)

दर्पणकृता विश्वनाथेन प्रपञ्चितं -

'विरतास्वभिधाद्यासु ययाऽर्थो बोध्यतेऽपर:।

सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च।।' इति

(साहित्यदर्पणम्, द्वितीयपरिच्छेद:, कारिका - २४)

यथा 'गङ्गायां घोष:' इत्यादौ जलमयाद्यर्थबोधनाद् अभिधायां तटाद्यर्थबोधानच्च लक्षणायां विरतायां यया शीतत्वपावनत्वाद्यतिशायादिर्बोध्यते सा व्यञ्जना। सा च द्वेधा शब्दनिष्ठार्थनिष्ठा च। आद्या तु द्वेधा, अभिधामूला लक्षणामूला चेति।

आदौ आनन्दवर्धनेन व्याञ्जनावृत्युपरि सविशेषं गुरुत्वं समारोप्य ध्वनिप्रस्थानस्य प्रतिष्ठार्थं 'ध्वन्यालोक:' इति ग्रन्थ: प्राणायि। अस्मिन् ग्रन्थे तेन वाच्यप्रतीयमानभेदेन अर्थस्य विभागद्वयं प्रादर्शि। व्यञ्जनावृत्तिलभ्यं व्यङ्ग्यार्थं प्रतीयमानार्थं वा तेन काव्यस्यात्मरूपेण स्वीकृत्य समुद्घोषितं

- 'काव्यस्यात्मा ध्वनिः' इति। सिद्धान्तमिमं प्रमाणयितुं तेन युक्ता उदाहरणेन च प्रतिपादितं यद् वाच्यार्थात् प्रतीयमानार्थः स्वतन्त्रः एव। ध्वन्यालोकस्य प्रथमोद्योते तेनोक्तं -

'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।

यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।' इति।

नारीदेहे लावण्यं यथा अलङ्कारसंस्थानालङ्कारयोगादिभ्यः सम्पूर्णभिन्नाकारेण प्रतीतिगोचरं भवति, तथैव प्रतीयमानोऽर्थोऽपि काव्यस्य गुणरीत्यलङ्कारादिरूपादवयवात् पृथगेव। गुणरीत्यलङ्कारादयस्तु वाच्यार्थस्यैव भेदविशेषाः। प्रतीयमानार्थः काव्यस्य प्राणभूतः सह्रदयहृदयसंवेद्यश्च। आनन्दवर्धनप्रदर्शितः प्रतीयमानोऽर्थोऽयं व्यञ्जना इत्यभिधया अभिधीयते परवर्तिभिः आलङ्कारिकैः।

आनन्दवर्धनेन वस्तलङ्काररसभेदेन ध्वनेः भेदत्रयं स्वीत्रियते। एतेषु वस्त्वलङ्कारध्वनी सर्वथा रसं प्रति पर्यवस्येते। अनेन प्रमाणितं भवति यत् अभिधा-लक्षणा-तात्पर्यातिरिक्ता वृत्तिरेका वर्तते, यस्याः अग्रणे रसालङ्कारध्यनीनां प्रतीतिः न जायते, एतेषामुपलब्धिः सर्वजनस्वीकृत्वात्। काव्यस्य प्राणाः व्यञ्जनावृत्तिरियम्। विश्वनाथेन साहित्यदर्पणे शब्दिदं-

'वृत्तीनां विश्रान्तेरभिधा-तात्पर्य-लक्षणाख्यानाम्।

अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम।।'' (सा० द०, पञ्चमपरि०, कारिका-१)

केचन ब्रवन्ति - अभिधावृत्तिः सर्वमर्थं बोधयति, तस्मात् व्यञ्जनावृत्तेः स्वीकरणं पिष्टपेषणम्। धनिकेनापि ध्वनितं 'तात्पर्यव्यतिरेकाच्च व्यञ्जकत्व न ध्वनिः। यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम्।' इति (सा० द० पञ्चम परि०)

केषाञ्चन मते विभावानुभावव्यभिचारिसंगाद्रसनिष्पत्तिः भवति। अभिनवगुप्रादयः आचार्याः तेषां मतानि खण्डितवन्तः। तेषां नये रसैः सह विभावादीनां कार्यकारणसम्बन्धः नास्ति। दुग्धं यथा दधिने कल्पते, तद्वत् रत्यादिस्थायिभाव एव रसाय सम्पद्यते। एवम् आचार्यैः प्रादर्शि ध्वनिरसादीनाम अवगत्यर्थं व्यञ्जनावृत्तेः स्वीकारः अपरिहार्यः।

तात्पर्यम् : वाक्यार्थप्रतिपादनार्थम् अभिधालक्षणाव्यञ्जनानामकं वृत्तित्रयं हित्वा तात्पर्यनाम्नि अपरा एका वृत्तिः वर्तते। एतेषां मते, अभिधया एकैकपदार्थबोधनविरमाद् वाक्यार्थरूपस्य पदार्थन्वयस्य बोधिका तात्पर्यं नाम वृत्तिरस्ति।

आचार्येण मम्मटेन काव्यप्रकाशस्य द्वितीयोल्लासे तात्पर्यार्थविवेचनक्रमे 'तात्पर्यार्थोऽपि केषुचित्' इत्यस्य वाक्यस्य व्याख्यायाम् अभिहितान्वयवादान्विताभिधानवादभेदेन मीमांसकानां पक्षद्वयं समुपस्थापयति।

अभिहितान्वयवादः - कुमारिलभट्टादीनां मते प्रथमम् अभिधाशकत्या दपानामुपस्थितिः भवति। अनन्तरम् आकाङ्क्षा-योग्यता-सन्निधिवशात तेषामन्तयः, तदनन्तरं वाक्यर्थज्ञानं भवति। अतः तात्पर्यार्थज्ञानाय तात्पर्या शक्तिः आवश्यकी। अर्थात् अभिहितानां स्वस्ववृत्या परैः उपस्थितानाम्

अर्थानाम अन्वयो भवति।

अन्विताभिधानवाद: - प्रभाकरादीनां मते 'वाच्य एव वाक्यार्थ:' इत्युक्ते: अन्तितानां पदानामेव उपस्थिति: भवति। अत: तात्पर्यशक्त्या: आवश्यकता नास्ति। पदानि अन्वितानि भूत्वा पश्चात् विशिष्टमर्थं कथयन्ति।

'विशिष्ट एव पदार्थ: वाक्यार्थ: न तु पदार्थनां वौशिट्यम्।' इति

संकेतग्रहेण बालक: अन्वितपदेनैव अर्थस्य ग्रहणं करोति। अत्र मम्मट: अभिहितान्वयवादं स्वीकरोतीति शिवम्।

**सन्दर्थग्रन्था: -**

१. आचार्य: रामानन्द: (द्वितीयसंस्करणम् १४०४ बङ्गाब्दे), काव्यप्रकाश:, संस्कृतपुस्तकभाण्डार, कोलकाता।
२. मुखोपाध्याय: विमलाकान्त: (द्वितीयसंस्करणम्, माघ १३६ बङ्गब्दे), साहित्यदर्पण:, संस्कृतपुस्तकभाण्डार, कोलकाता।
३. मिश्र: जगदीशप्रसाद: (प्रथमसंस्करणम् २००६), व्याकरणदर्शनस्य दर्शनान्तरै: सह तुलनात्मकमध्ययनम् राष्ट्रियसंस्कृतसंस्थानम्, नवदेहली।
४. दाहाल: लोकमणि: (पुनर्मुद्रितसंस्करणम् २०११), परमलघुमञ्जूषा, चौखम्बा सुरभारतो प्रकाशन, वाराणसी।
५. भट्टाचार्य: रवीन्द्रकुमार: (नूतनसंस्करण, २००९), शब्दार्थतत्त्व, सदेश, कोलकाता।
६. चट्टोपाध्याय: चिन्मय:, काव्यादर्श:, परिचमबङ्गराज्यपुस्तकपर्षत्, कोलकाता।
७. चक्रवर्ती सत्यनारायण:, ध्वन्यालोक: (प्रथमोद्योत:), संस्कृतपुस्तकभाण्डार:, कोककाता)।
८. भट्ट: वामनाचार्य: (१९१७ ईशवीयाब्दे प्रथमसंस्करणस्य पुनर्मिद्रितसंस्करणम् २००९)
९. काव्यप्रकाश: (झल्कीकरटीका), परिमल पब्लिकेशन्स, दिल्ली।

विश्वभारतीविश्वविद्यालय:
सस्कृतविभाग:

## धर्मशास्त्रं प्रति उत्कलस्य अवदानम्

**ड. बलराम पण्डा**

अष्टादश विद्यासु धर्मशास्त्रस्य स्थानं स्वतन्त्रम्। धर्मस्य शास्त्रं धर्मशास्त्रम्। ध्रियते अनेनेति (डु) धृञ् (धारण पीषणयो:) धाती: मन्प्रसये सिद्धौ धर्मशब्दो भावनाचारब्यवहारवोधन पर:। तत्र भावना मत: प्रत्ययसम्वद्धा ईश्वरमाहात्म्यावबोधन परा। यदेव शास्त्रं जनानां आचारब्यवहार प्रायश्चितस्वरूप— निर्द्धारकं तदेव धर्मशास्त्रम्। धर्माश्च वहुविधा:। सामान्यधर्मा, वर्णधर्मा:, आश्रमधर्मा, वर्णोश्रमधर्मा, राजधर्मा, स्त्रीधर्मा:, मुनिधर्मा:, कुलधर्मा:, देशधर्मा:, युगधर्माश्च। पुनश्च को नाम धर्म: ? यात्र जगद्धारकत्वं तत्र धर्मत्वम्। अर्थात्-जगन्मूलत्वेन संसृतिनियामकानि तत्त्वानि 9धर्म:" इति ब्यपदिश्यन्ते। एतद्भिन्नं अस्य धर्मस्य लक्षणविषये मनुना उक्तम् यत्—

धृति: क्षमा दमोऽस्तेयं शौचमिन्द्रिय निग्रह:।
धीर्विद्या सत्यमक्रोधो दशकं धर्म लक्षणम्।।[१]

महाभारतकृता वेदब्यासेन अपि जगद्धारकतत्त्वानां धर्म: इति समारव्या ब्यधायि। यथार्थेनकथ्यते तेनाऽपि—

धारणाद् धर्म इत्याहु धर्मो धारयते प्रजा:।
य: स्योद् धारणसंयुक्त: स धर्म इति निश्चय:।।

वैशेषिक दर्शनकृता महर्षि कणादेन प्रतिपाद्यते यत् यद्धारा लौकिकी पारलौकिकी च समुन्नति: संजायते, साव धर्म शब्देन वाच्य:। "यतोऽभ्युदय नि:शेयससिद्धि: स धर्म:ह्व। मीमांसादर्शनकृता जैमिनि महर्षिणा धर्मलक्षणं निर्दिश्यते यत्— चोदना लक्षणोऽर्थो धर्म:ह्व।[२] अर्थात् यदेववक्त्वं मानवानां स्फूर्तिजनकम्, सत्कर्मणि प्रवर्तकं, अन्तश्चेतना प्रवोधकम् च तदेव धर्म-शव्दवाच्यम्। सर्वोपरि धर्मस्य लक्षणविषये मनुस्मृतौ निर्दिश्यते—

वेद: स्मृति: सदाचार: स्वस्य च प्रियमात्मन:
एतच्चतुर्विधं प्राहु: साक्षाद् धर्मस्य लक्षणम्।।[३]

एवम् अवलोक्यते यत् मानवजीवने सर्वदा सर्वथा च धर्मस्य अनिवार्यत्वं वर्त्तते तस्याश्रयद्वारा ऐहिकम् आमुष्मिकं च सुखमवाव्यते। एतद्भिन्नं, सर्वेषां धर्मसुत्राणां ब्याख्यायिका: स्मृतय:। उक्तं एव 9श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृति:।[४] तेन वेदोक्तधर्माचारब्यवहाराख्यायिका एव स्मृतय:। सूत्रस्मृत्यो: एकायनं धर्मशास्त्रम्। अपरं तु स्मृतयो हि धर्मसूत्र ब्याख्यान्य:। यथैव प्रतिसंहिता धर्मसूत्राणां अवस्थिति: तथैव स्मृतीनां अपि कलण्यते। तेन स्मृतयोऽत्यनन्ता एव। तथापि प्राधान्येन अष्टादशस्मृतयो यत्रतत्रोल्लिख्यन्ते। परन्तु अधुना अन्येऽपि स्मृतयो नामत: श्रूयन्ते स्वरूपतो दृश्यन्ते च। धर्मशास्त्र-प्रयोजकानां विषये याज्ञावल्क्य स्मृतौ वर्ण्यते यत्—

मन्वत्रिविष्णुहारीत याज्ञावल्क्योशनोऽङ्गिरा:।

यमापस्तम्व सम्वर्त्ता कात्यार्यन वृहस्पति:।।
परा‍शर ब्यास शङ्खलिखिता दक्षगौतमौ
शातातपो वशिष्ठश्च धर्मशास्त्र प्रयोजका:।।[५]

पुनश्च पैठीनसिर्यथाऽऽह—

तेषां मन्वङ्गिरोब्यासगौतमासुशनोयमा:।
वशिष्ठदध्नसंवर्तशातातप पराशरा:।।
विष्णावापस्तम्वहारीन्ता: शङ्ख: कात्यायनो भृगु:।
सुमन्तु: कश्यपो वभ्रु: पैठीनी ब्याघ्र एव च।।
सत्यव्रतो भरद्वाजो गार्ग्य: कार्ष्णाजिनिस्तथा।
जावालिर्जमदग्निश्च लौगाक्षि र्ब्रह्मसम्भव: (गर्भ:)।।[६]
इति धर्म प्रणेतार: षट्त्रिंश दृषयस्तथा।

इत्यादि वचनाच्य स्मृतयोऽष्टादश संख्यका एकविंशति संख्यका वा षट्त्रिशृसख्यका वा। किन्तु स्मृतिभन्येषु अष्टादशस्मृतिग्रन्था: प्राधान्येन गृहयन्ते। तत्राऽपि मनु याज्ञावल्क्य पराशरात्रिवशिष्ठ विष्णु हारीत काव्यायनादि प्रोक्ता: प्रधानतमा इति।

स्मृतीनां रचनाकाल विषये वहव: विवादा: सन्ति।

सामान्यतो विक्रमपूर्व सप्तमशतकादारभ्य विक्रमानन्तर षष्ठशतक पर्यन्तं स्मृतिकाल इति पण्डिता: समामनन्ति। समग्रस्मृति साहित्यस्यकालं मुख्यत: त्रिधा विभज्यते। अस्यकालस्य प्रथमभागे ईशवीय पूर्व षष्ठ (६) शतकादारभ्य ईशवीय द्वितीय शतकाभ्यन्तरे श्रौतसूत्र-गृहयसूत्र,-अर्थशास्त्र मनुस्मृति प्रभृतय: रचिता आसन्। द्वितीयेभागे द्वितीयशतकादारभ्य नवमशतकाभ्यन्तरे याज्ञवल्क्य— नारद्-विष्णु-वायु-कूर्म-मस्यादि-पुराणग्रन्था: रयिता आसन्। भारतवर्षस्य गौरवमय-इतिहासेषु वैदिककालादारभ्य अद्यावधि शिक्षा-संस्कृति-कला-स्थपत्यादिषु क्षेत्रेषु उत्कलीया: विश्वविख्याता:। संस्कृतसाहित्यस्य अन्यान्य विभावेन सार्द्धं वेद-स्मृति-काब्य-नाटक-सङ्गीत-नृत्य-दर्शन-ब्याकरण-अलङ्कार-गणित-ज्योतिष-तन्त्रप्रभृतिषु विषयेषु उत्कलीया: प्रणीणा: आसन्। उद्‌गता अम्युन्नतिं प्राप्ता कला यस्य स उत्कलीनाम देश:। शिक्षा-संस्कृति-कला-भास्कर्य्यादि-विभिन्नानां विषयान्तर्गतानां शास्त्रीय कृतिषु अयमुत्कलदेशसम्भुतानां महिमान्वितानां कवि पुङ्गवानां वहव: उपादेयमौलिकग्रन्था: कालस्य कराल कुक्षौ विलीना अभवन्। परन्तु सम्प्रति प्राप्तेषु स्मृति ग्रन्थेषु प्रसिद्ध ज्योतिषशास्त्र- "भास्वतीह्न ग्रन्थस्य प्रणेता शतानन्द आचार्य. (१०५०-ईशवीयकाले) शतानन्द रत्नमाला, शतानन्द संग्रह नाम्ना च ग्रन्थद्वयं प्रणयन मकरोत् इति परवत्तीस्मृतिग्रन्थेभ्य: ज्ञायते। शतानन्द: हि स्मृतितथा ज्योतिषशास्त्रप्रणेतृषु प्राचीनतम आसीत् श्रीमद् भागवतस्य "भावार्थदीपिका टीका तथा भगवद् सीताया: सुवोधिनी भात्यकार: श्रीधरस्वामी (१२५० ख्रीष्टाब्द:) आचार चिन्तामणि, दानवाक्यावली नामकं स्मृतिग्रन्थद्वयं प्रणयनं चकार। आर्यासप्तशतीह्न प्रणेता गोवर्द्धन आचार्य:,

उदयन आचार्य:, नीलाम्वरआचार्यस्य (ईशवीय ११५० ख्रीष्टाब्दे:) विख्यात स्मृतिग्रन्थ प्रणेतार: आसन् तेषां ग्रन्था: सम्प्रति नीपलभ्यन्ते। शङ्खधर: (१२७५ ख्रीष्टाब्द) 9स्मृतिसमुच्चय" नाम्ना ग्रन्थं विरचितवान्। शम्भुकर वाजपेयी कवि पुङ्खव: (१३०० ख्रीष्टाब्द:) नित्याचार-श्राद्ध-विवाह-श्रौताधान-होम-दशपौर्णमासेष्टि वैरवानरीयेष्टि-प्रभृति विषय समन्वितै: ग्रन्थै: साकं दुर्बलकृत्य-स्मार्त्तरचनावली-वृषोत्सर्गविधि-प्रभृति स्मृतिग्रन्थान् रचितवान्। शम्भुकरवाजपेयी महोदयस्यपुत्र: विद्याकर: (१३३० ख्रीष्टाब्द:) विद्याकरपद्धति-क्रमदीपिका-दिनकृत्यदीपिका-मोक्षपरीक्षादि ग्रन्थान् अलिखत्। एतद्भिन्नं, रामचन्द्र वाजपेयी (१३५५ ख्रीष्टाब्द:) गृह्यसूत्रपद्धति-शुल्व-वार्त्तिकटीका-शुल्वसूत्रकृत्ति-प्रभृति. ग्रन्थादीनां रचयिता रूपेण प्रसिद्धिं लब्धवान। वृहस्पति सुरि: (१३७५ ख्रीष्टाब्द:) कृत्यकौमुदीं, योभीश्वरपात्र (२४२५ ख्रीष्टाब्द) दानदीपावलीं, गजपति पुरुषोत्तमदेव: २४६६-२४१७ ख्रीष्टाब्द:) मुक्तिचिन्तामणि गोपालार्च्यन पद्धति नामकं च ग्रन्थद्वयं प्रणयनं अकरोत्। कालिदास चयनि (१५२० ख्रीष्टाब्द:) शुद्धि चन्द्रिकाह्ल ग्रन्थस्य रचयिता आसीत् इति ज्ञायते। उत्कले सूर्यवंशस्य राजत्वकाले अर्थात् २४३५ शतकादारम्भ २५२५ शतकाभ्यन्तरे उत्कलीयस्मृति ग्रन्थ प्रणेतृणां अनेका: स्मृतिग्रन्था: दृष्टिगोचरीभूता: भवन्ति। तेषां स्मृतिग्रन्थ प्रणेतृणां एका सूचिका प्रस्तूयते।

| ग्रन्थ प्रणेता | समय: | स्मृतिग्रन्था: |
|---|---|---|
| मृत्युञ्जय मिश्र: | | १४३४-१५३५, |
| सत्समय: शुद्धिमूक्तावली च | | |
| जलेश्वर मिश्र: | | १४३४-१५३५, |
| जलेश्वर पद्धति: | | |
| नरसिंह मिश्र: | १४३४-१५३५, | नित्याचार प्रदीप: |
| बलभद्र मिश्र: | १४३४-१५३५, | शारीकसार; पुरुषोत्तम स्मृति, अदैत चिन्तामणि, बलभद्र संग्रहश्च |
| मन्त्री गोदावर मिश्र: | १४३४-१५३५, | आचारयिन्तामणि, नीति चिन्तामणि, नीतिकल्पलता, च |

चिन्तामणि, नीतिकल्पलता, च। एतद्भिन्नं, नरसिंहमिश्र वाजपेयी मह्यकवे: (२५७० शताद्धी) नित्याचार-समय-वर्ष-भक्ति-ब्यवस्था-श्राद्ध-प्रायश्चित-प्रतिष्ठा-प्रभृतय: अष्टादश प्रदीपग्रन्था सन्ति। पुनश्च विश्वनाथ मिश्रस्य स्मृतिसारसंग्रह:, विप्रमिश्रस्य (१३२५-ख्रीष्टाद्ध:) श्राद्धदीप:, दिब्यसिंह महापात्रस्य (२३७५ ख्रीष्टाद्ध:) कालदीप श्राद्वदीपस्य। वासुदेव रथस्य (१७१५ ख्रीष्टाद्ध) स्मृति-न्याय-मीमांसा-मण्डल-भुवनेश्वरी प्रकाशादि ग्रन्था:, गदाधर राजगुरो: (१७२५ ख्रीष्टाब्द:) आचार-काल-शुद्धि-दान-व्रत-विवाह-स्नान-संस्कारसारप्रभृतय: अष्टादश ग्रन्था: च सन्ति। आलङ्कारिक कविरघुनाथ दासस्य (१७३० ख्रीष्टाब्द:) कालनिर्णय:, महामहोपाध्याय कृष्णमिश्रस्य (१७५०

ख्रीष्टाब्द:) कालसर्वस्वम्, विश्वम्भर मिश्रस्य(१७७५ ख्रीष्टाब्द:) स्मृतिदीपिका, वासुदेव त्रिपाठी महोदयस्य (१७५० ख्रीष्टाब्द:) प्रायश्चित विलीचनम्। कृष्णदासस्य (१७५० ख्रीष्टाब्द:) नित्याचारप्रकरण-नित्याचार-पद्धतिश्च, गोपीनाथ वाजपेयी महाकवे: (१७०० ख्रीष्टाब्द:) पण्डितसर्वस्वम्, योगीप्रहराजपात्रस्य (१७५० ख्रीष्टाब्द:) स्मृतिदर्पण:, मुरारिमिश्रस्य प्रायश्चितमनोहर:, मागुणि मिश्रस्य प्रतिष्ठासार-प्रतिष्ठापञ्यक-प्रतिष्ठासारपद्धतिश्च, गोपालनन्दस्य नित्याचारपद्धति:, गोपीनाथ पट्टनायकस्य शूद्राह्निक पद्धति: महामहोपाध्याय सदाशिवमिश्रस्य कल्याप द्रर्मसर्वस्व-प्रभृतिस्मृतिग्रन्था: चिरस्मरणीया:। एते उत्कलीयस्मृतिग्रन्था: समग्रभारतवर्षस्य स्मृति-ग्रन्थागारं पुष्कलयन्ति। सर्वोपरि अष्टादशशतकस्य उत्कलीय कवि: गोविन्द कविभूषणा सामन्त राय एक: महान् कवि आसीत्। ऐतिहासिक इष्टर, एम् एम् चक्रवर्त्ती, हरप्रसादशास्त्री इत्यादीनां महोदयानां मतानुसारं अयंकवि वर: सूरीसर्वस्व ग्रन्थस्य प्रणेता आसीत्। एतद्भिन्नं वीरसर्वस्व-समृद्धमाधवनाटकम्-ग्रन्थद्वय: तस्य अन्यतमाकृति रूपेण स्वीक्रियते। गोविन्दकविभूषणस्य पौत्र कविकमल-लोचनखड़गरायस्य वर्णनानुसारं एतद् ज्ञायते यत् गोविन्दकविभूषण: एकं चिन्तकाब्यं रचितवान्।

तस्मिन् प्रसङ्गे उक्तम् यत्—

आसीत् श्री विश्वनाथ: प्रवरतरभरद्वाज वंशावत्रंस:
शान्तात्मा कृष्णभक्तोऽभवदथ तनुजी सस्तती रामचन्द्र:
तत्पुत्र: चित्रकाब्यागम रचनापटु: श्रीलगोविन्दनामा
तस्यासीन्नन्दनी य: सकलमुणकला वन्दित: कृष्णचन्द्र:।।

सुरिसर्वस्वग्रन्थ: भवति धर्मकर्मयोगविषयक: एक: संग्रहग्रन्थ:। ग्रन्थेऽस्मिन् ३८१० श्लोका: सन्ति। पुनश्च चत्वारिंशत् संग्रह्यअपि विद्यन्ते। ग्रन्थोऽयं पूर्वोत्तरखण्ड रूपेण द्विधा विभज्यते। एकविंशति संग्रह्यात्मकस्य पूर्वखण्डस्य विषयवस्तुनि निम्नश्लोकादेवाववोध्यते। उक्तम्-अत्रोक्ता पूर्वखण्डे क्षितित्लकलना कुण्डशालादि क्लुप्तिश्चक्रै: शिष्याणुशुद्धि घटयजनहुतै र्भूरिदीक्षा विशेषा:।

मन्त्राणां पूर्वसेवार्च्यन जपहवनै र्नित्यवैभातकृत्यं
देवार्च्चाङ्गाङ्गि भावोऽर्क यजनममरार्च्चालया चारकृत्यम्।।७

एकोनविशति संग्रहात्मकस्य उत्तरखण्डस्य विषयबस्तुनि तथैव एकस्मात् श्लोकादेव ज्ञायते—

अत्रोक्ता प्रान्तखण्डे यजनसमुचितोपात्रसंस्थासनादि—
न्यासान्तर्यागपीठार्च्चन सहितसुरा वाहुनादि क्रमेण।
संहारान्तं समस्तं स्तवन हवनजपास्तपणं तत् फ्लोक्ति:
सेवा नैमित्तिकी चाशनशयनविधि: शुद्धिरष्टाङ्गयोग:।।८

एतेभ्य: प्रमाणेभ्य: परिज्ञायते यत् रामचन्द्र सामान्तरायस्य पुत्र: गोविन्द कविभूषण सामन्तराय: एक: विख्यान्त: स्मृतिग्रन्थ प्रणेता आसीत्। अनेन प्रकारेण वहव: उत्कलीय स्मृतिग्रन्थ प्रणेतार: सन्ति, येषां स्थानं धर्मशास्त्रेतिहासे स्वतन्त्रमिति स्वीक्रियते।

**सहायक ग्रन्थसूची:**

१. मनुं— ६-९२
२. मीमांसा— १.१.२
३. मनुं— २-१२
४. तत्रैव— २.१०
५. या: स्मृति— (१/४-५)
६. संस्कृतसाहित्येतिहास:— पृ-६७-६८
७. सूरिसर्वस्वम् (संग्रह-२१-१०१)
८. तत्रैव— संग्रह (३९-७७)

निजिगड
नरसिंहपुरम्, कटकम

## अष्टाध्यायाम् उल्लिखितानां स्त्रीप्रत्ययानां परिचयात्मकम् अध्ययनम्

शुभलक्ष्मी आचार्य:

(कूटशब्दा: - ऊङ्, ङीन्, ङीप्, ङीष्, चाप्, टाप्, डाप्, ति)

महर्षे: पाणिने: अष्टाध्यायाम् विविधानि प्रकरणानि अभिलक्ष्य विविधा: प्रत्यया: विनिर्दिष्टा: सन्ति। यद्यपि अष्टाध्यायाम् प्रकरणानुसारं सूत्राणां विभागीकरणं न कृतं तथापि सिद्धान्तकौमुद्यादिषु प्रक्रियाग्रन्थेषु प्रकरणानुसारं सूत्राणि सज्जिकृतानि । तेषु प्रकरणेषु स्त्रीप्रत्यय प्रकरणम् अन्यतमम् अस्ति। अस्मिन् स्त्रीप्रत्यय प्रकरणे यानि यानि सूत्राणि सन्ति तेषु तेषु सूत्रेषु येषां प्रत्ययानां निर्देश: च अस्ति। तेषां विवेचनात्मकम् अध्ययनम् अस्मिन् शोधपत्रे विधीयते। स्त्रीप्रत्ययप्रकरणे ये ये आगमा: विनिर्दिष्टा: तेषां आलोचनम् अपि अत्र विहितम्। तेषा प्रत्ययानां विस्तृतपरिचय: अध: प्रदीयते -

| प्रत्यय: | | विधायकसूत्रम् | कानिचित् सिद्धपदानि |
|---|---|---|---|
| १. | ऊङ् | ऊङुत: - ४.१.६६ (१) | कुरू: |
| | | पङ्गोश्च - ४.१.६८ (२) | पङ्गू: |
| | | बाह्वन्तात् संज्ञायाम् - ४.१.६७ (३) | भद्रबाहू: |
| | | संहितशफलक्षणवामादेश्च - ४.१.७० (४) | संहितोरु: |
| | | कद्रुकमण्डल्वोश्छन्दसि - ४.१.७१ (५) | कद्रू: |
| | | संज्ञायाम् - ४.१.७२ (६) | कद्रू: |
| २. | ङीन् | शार्ङ्गरवाद्यञो ङीन् - ४.१.७३ (७) | शृङ्गारोरपत्यम् |
| ३. | ङीप् | ऋन्नेभ्यो ङीप् - ४.१.५ (८) | कर्त्री,दण्डिनी,राज्ञी |
| | | उगितश्च - ४.१.६ (९) | भवती,भवन्ती,पचन्ती |
| | | वनो र च - ४.१.७ (१०) | धीवरी,अतिधीवरी |
| | | अनो बहुव्रीहे: - ४.१.१२ (११) | सुचर्मा मृगी,सुपर्वा यष्टि: |

| प्रत्यय: | | विधायकसूत्रम् | कानिचित् सिद्धपदानि |
|---|---|---|---|
| | | टिड्ढाऽणञ्द्वयसज्दध्नञ्मात्रच्तयप्ठक्ठञ्-कञ्क्वरप: - ४.१.१५ (१२) | मन्द्रचरी,सौपर्णेयी, कुम्भकारी,ऊरुदध्नी |
| | | यञश्च - ४.१.१६ (१३) | गार्गी |
| | | वयसि प्रथमे - ४.१.२० (१४) | कुमारी,किशोरी |
| | | द्विगो: - ४.१.२१ (१५) | त्रिलोकी,त्रिपादी |
| | | संख्याऽव्ययादेङीप् - ४.१.२६ (१६) | द्वयूध्नी,अत्यूध्नी |

| | | | |
|---|---|---|---|
| | | दामहायनान्ताच्च - ४.१.२७ [१७] | द्विदाम्नी,द्विहायनी |
| | | नित्यं संज्ञाछन्दसो: - ४.१.२९ [१८] | सुराज्ञी नाम ग्राम:। |
| | | रात्रेश्चाऽजसौ - ४.१.३१ [१९] | या रात्री। रात्रीभि:। |
| | | **विकल्पसूत्राणि** | |
| | | पादऽन्यतरस्याम् - ४.१.८ [२०] | द्विपदी,द्विपात् |
| | | अन उपधालोपिनोऽन्यतरस्याम् - ४.१.२८ [२१] बहुराज्ञी सभा,बहुराजा सभा | |
| ४. | **ङीष्** | बहुव्रीहेरुधसो ङीष् - ४.१.२५ [२२] | कुण्डोध्नी |
| | | अन्यतो ङीष् -४.१.४० [२३] | कल्माषी,सारङ्गी,शबली |
| | | षिद्गौरादिभ्यश्च - ४.१.४१ [२४] | नर्तकी,गार्ग्यायणी,गौरी |
| | | नित्यं छन्दसि - ४.१.४६ [२५] | बह्वीषु हित्वा प्रपिवन् |
| | | भुवश्च - ४.१.४७ [२६] | विभ्वी |
| | | पुंयोगादाख्यायाम् - ४.१.४८ [२७] | गोपा |
| | | क्रीतात् करणपूर्वात् - ४.१.५० [२८] | वस्त्रक्रीती |
| **प्रत्यय:** | | **विधायकसूत्रम्** | **कानिचित् सिद्धपदानि** |
| | | क्तादल्पाख्यायाम् - ४.१.५१ [२९] | अभ्रविलिप्ती द्यौ: |
| | | बहुव्रीहेश्चाऽन्तोदात्तात् - ४.१.५२ [३०] | शङ्खाभित्री,केशलूनी |
| | | न क्रोडादिबह्वच: - ४.१.५६ [३१] | कल्याणक्रोडा |
| | | दीर्घाजिह्वी चच्छन्दसि - ४.१.५९ [३२] | दीर्घाजिह्वी |
| | | जातेरस्त्रीविषयादयोपधात् - ४.१.६३ [३३] | वृषली |
| | | इतो मनुष्यजाते: - ४.१.६५ [३४] | दाक्षी |
| | | **विकल्पसूत्राणि** | |
| | | वोतो गुणवचनात् - ४.१.४४ [३५] | पट्वी,पटु: |
| | | बह्वादिभ्यश्च - ४.१.४५ [३६] | बह्वी,बहु: |
| | | नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च - ४.१.५५ [३७] | तुङ्गनासिकी,बिम्बोष्ठी, |
| ५. | **चाप्** | यङश्चाप् - ४.१.७४ [३८] | आम्बोष्ठ्या,सौवीर्या |
| | | आवट्याच्च - ४.१.७५ [३९] | आवट्या |
| ६. | **टाप्** | अजाद्यतष्टाप् - ४.१.४ [४०] | अजा,एडका,अश्वा |
| | | टाबृचि - ४.१.९ [४१] | द्विपदा ऋक्,चतुष्पदा ऋक् |
| ७. | **डाप्** | डाबुभाभ्यामन्यतरस्याम् - ४.१.१३ [४२] | पामा,दामा,सीमा |

| | | | |
|---|---|---|---|
| ८. | ति | यूनस्तिः - ४.१.७७ [४३] | युवति |
| <u>आगमः</u> | | <u>विधायकसूत्रम्</u> | <u>कानिचित् सिद्धपदानि</u> |
| १. | आनुक् | इन्द्रवरुणभवशर्वरुद्रमृडहिमाऽरण्ययवयवन - मातुलाऽऽचार्याणामानुक् - ४.१.४९ [४४] | इन्द्राणी,वरुणानी, शर्वाणी,रुद्राणी |
| २. | नुक् | अन्तर्वत्पतिवतोर्नुक् - ४.१.३२ [४५] | |

अन्तर्वत्नी,पतिवत्नी

**पादटीका**

१. अष्टाध्यायी,४.१.६६
२. तत्रैव,४.१.६८
३. तत्रैव,४.१.६७
४. तत्रैव,४.१.७०
५. तत्रैव,४.१.७१
६. तत्रैव, ४.१.७२
७. तत्रैव,४.१.७३
८. तत्रैव, ४.१.५
९. तत्रैव, ४.१.६
१०. तत्रैव, ४.१.७
११. तत्रैव, ४.१.१२
१२. तत्रैव, ४.१.१५
१३. तत्रैव, ४.१.१६
१४. तत्रैव, ४.१.२०
१५. तत्रैव, ४.१.२१
१६. तत्रैव, ४.१.२६
१७. तत्रैव, ४.१.२७
१८. तत्रैव, ४.१.२९
१९. तत्रैव, ४.१.३१
२०. तत्रैव, ४.१.८
२१. तत्रैव, ४.१.२८
२२. तत्रैव, ४.१.२५
२३. अष्टाध्यायी, ४.१.४०
२४. तत्रैव, ४.१.४१
२५. तत्रैव, ४.१.४६
२६. तत्रैव, ४.१.४७
२७. तत्रैव, ४.१.४८
२८. तत्रैव, ४.१.५०
२९. तत्रैव, ४.१.५१
३०. तत्रैव, ४.१.५२
३१. तत्रैव, ४.१.५६
३२. तत्रैव, ४.१.५९
३३. तत्रैव, ४.१.६३
३४. तत्रैव, ४.१.६५
३५. तत्रैव, ४.१.४४
३६. तत्रैव, ४.१.४५
३७. तत्रैव, ४.१.५५
३८. तत्रैव, ४.१.७४
३९. तत्रैव, ४.१.७५
४०. तत्रैव, ४.१.४
४१. तत्रैव, ४.१.९
४२. तत्रैव, ४.१.१३
४३. तत्रैव, ४.१.७७
४४. तत्रैव, ४.१.४९

४५. तत्रैव, ४.१.३२

**सहायकग्रन्थसूची**

१. अग्रवाल्,वासुदेवशरण,पाणिनिकालीनभारतवर्ष,चौखम्बा विद्याभवन,वारणसी,१९९६.

२. ईश्वरचन्द्र (सं), अष्टाध्यायी (प्रथम,द्वितीय भागः),चौखम्बा संस्कृत प्रतिष्ठान,दिल्ली,

२००९.

३. पाण्डेय,गोपालदत्त,वैयाकरणसिद्धान्तकौमुदी - व्याख्याकारः,चौखम्बा सुरभारती प्रकाशन,वाराणसी,२००१.

४. मिश्र,सुधीर कुमार,अष्टाध्यायीसूत्रपाठः,विद्यानिधि प्रकाशन,दिल्ली,२०१६.

**English Books**

5. Dvivedi, H.P., *Studies in Panini*, Inter-India Publications,Delhi,1978.

6. Katre, S.M., Dictionary of Panini, Deccan College, Poona.Part- 1,1968, Part-2,1968, Part -3,1969, Part- 4 ( Ganapatha),1971.

7. Mishra,Vidya Niwas,The Descriptive Technique of Panini, Ratna Publications,Varanasi,2001.

8. Rajendran,C., *Aspects of Paninian Samantics*, Sahitya Akademi, New Delhi, 2002.

शोधच्छात्राः,
स्नातकोत्तरसंस्कृतविभागः,
उत्कलविश्वविद्यालयः,
वाणीविहारः,
भुवनेश्वरम्- ७५१००४.

## गीतगोविन्दस्य महत्वविवेचनम्

शान्तनुमण्डल:

**उपक्रम:**

वैष्णवकविजयदेवविरचितं 9गीतगोविन्दम्' इति गीतिकाव्यं भारतीयसाहित्यस्य तथा विश्वसाहित्यस्य काव्यरत्नमेकम्। वङ्गेश्वरलक्ष्मणसेनस्य सभाकविजयदेव: ख्रीष्टियद्वादशशतके प्रादुर्भूत: । तेन द्वादशसर्गनिबद्धं राधाकृष्णयोर्वसन्तकालीनपार्थिवदिव्यलीलामवलम्ब्य गीतगोविन्दं रचितम्। अशीतिश्लोकेन चतुर्विंशतिगीतेन च समृद्धमिदं गीतिकाव्यं, वैष्णवा: भक्तिशास्त्रस्योपनिषद् इति मन्यन्ते। जयदेवोत्तरसंस्कृतसाहित्ये वङ्गसाहित्ये इतरसाहित्येऽपि चास्य गीतिकाव्यस्य प्रभुतप्रभाव: परिलक्ष्यते। अस्य गीतिकाव्यस्य 9मधुरकोमलकान्तपदावलीम्" यत् केवलं भारतीयसमाजं साहित्यं वा नन्दयति, तन्न, इदं गीतिकाव्यं पाश्चात्यसारस्वतसमाजमपि स्पन्दयति।

आचार्यजयदेवविरचितं गीतगोविन्दमेकं भक्तिमूलकगीतिकाव्यम्। केवलं तन्न, अपि तु, अत्र प्रेमभक्तयोरपूर्वमपार्थिवं मिश्रणं गीतगोविन्दे दृश्यते । तत: कविजयदेव: यथार्थमवदत्—

यदि हरिस्मरणे सरसं मनो
यदि विलासकलासु कुतूहलम्।
मधुरकोमलकान्तपदावलीं
शृणु तदा जयदेवसरस्वतीम्।। (गीतगोविन्दम्,१/३)

**टीका:**

गीतगोविन्दस्यानेका: टीका: टीकाकाराश्च सन्ति। तेषां यथाक्रमं विवरणं प्रदीयते—

| टीका: | | टीकाकारा: |
|---|---|---|
| अनुपोदय: | — | अनूपसिंह: |
| अर्थरत्नावली | — | गोपाल: |
| गङ्गा | — | कृष्णदत्त: |
| गीतगोविन्दतिलोत्तमा | — | हृदयाभरण: |
| गीतगोविन्दप्रथमाष्टपदविवृति: | — | विठ्ठलदीक्षित: |
| गीतगोविन्दप्रबोध: | — | रामकान्त: |
| गीतगोविन्दव्याख्यानम् | — | प्रबोधानन्द: |

| | | |
|---|---|---|
| तत्त्वदीपिका | — | रामराय: |
| पदद्योतनिका | — | नारायणभट्ट: |
| पदाभिनयमञ्जरी | — | |

वासुदेववाचासुन्दर:

| | | |
|---|---|---|
| प्रकाशकौमुदी | — | |

कविराजचण्डीदास:

| | | |
|---|---|---|
| बालबोधिनी | — | पूजारीगोस्वामी |
| भावार्थदीपिका | — | चैतन्यदास: |
| भावविभाविनी | — | उदयनाचार्य: |
| माधुरी | — | रामतारण: |
| रत्नमाला | — | कमलाकर: |
| रसकदम्वकल्लोलिनी | — | भागवतदास: |
| रसमञ्जरी | — | शङ्करमिश्र: |
| रसिकप्रिया | — | राणाकुम्भ: |
| शशिलेखा | — | कृष्णदास: |
| श्रुतिरञ्जनी | — | विश्वेश्वरभट्ट: |
| श्रुतिरञ्जिनी | — | लक्ष्मणसूरि: |
| श्रतिसाररञ्जिनी | — | तिरुमलराज: |
| सन्देहभेदिका | — | कुमारखान: |
| सर्वाङ्गसुन्दरी | — | नारायणदास: |
| सानन्दगोविन्दम् | — | रूपदेवपण्डित: |
| सारदीपिका | — | जगद्धर: |
| साहित्यरत्नमाला | — | शेषकमलाकर: |
| साहित्यरत्नाकर: | — | शेषरत्नाकर: |
| सुबोधा | —भरतसेनमल्लिक आदि | |

अनुवाद:

वङ्गभाषायामपि गीतगोविन्दस्य बहूनि अनुवादकर्माणि बहूनां काव्यकाराणाञ्च नामनि ज्ञायन्ते। तेषामन्यतमा: खलु रसमयदासो गिरिधरदासो भगवानदासो द्विजप्राणकृष्णो जगदानन्दो जगत्सिंह: कविचन्द्रश्चेति। व्रजवुलिभाषायामपि गीतगोविन्दस्यानुवादकर्माणि परिलक्ष्यन्ते। गीतगोविन्दं विविधेषु वैदेशिकभाषासु अनूदितमस्ति। उल्लेखनीयानाममनुवादकार्याणां विवरणमध: प्रदीयते।

**German Translation :**

1. F.H.V. Dalberg , Erfurt, 1802.
2. A.W. Riemenschneider , Halle, 1818.
3. F. Ruckert , Gottingen, 1837.

**French Translation :**

1. Gaslon Courtillier, *The Gitagovinda pastronale de Jayadeva*, Trans, Parts Ernert Leroux, 1904.
2. Hippolyte Eanche, *Le Gitagovinda (Par Jayadeva)* Tr. Du Sanskrit on Francais, Paris, 1850.

**Latin Translation :**

1. Christianus Lassen, *Gitagovinda, Jayadeva poetae Indici Drama lyricum* (German), Bonn, 1836.

**Dutch Translation :**

B. Faddegon , Santpoort, 1932.

**English Translation :**

1. William Jones, *Gitagovinda*, Calcutta, Upendra Lal Das, 1894, Calcutta, Susil Gupta Pvt. Ltd. 1962.
2. Barbara Stoller Miller, *The Gitagovinda of Jayadeva*, Love Song of the Dark Lord, Motilal Banarsi Dass, 1984.
3. Dattatreya Ananta Apte, *Gitagovinda Kavya Kim Va Radhamadhavavilasa,* with trans.Khanapur, 1928.
4. Edwin Arnold , *The Indian Song of Songs*, London, Trubner and Co. 1875.

5. S.V. Parameswar Bhatt, *Gitagovinda*, Mysore, Sarasa Sahitya Prakasan, Metrical translation, 1961.

6. Duncan Gircenless, *The Songs of Divine Love (Gitagovinda)* (English poetry trans), Adyar Kalakshetra Publication, 1962.

7. Goerge Keyt, *Gitagovinda* (Tr. from Sanskrit illustrated), Bombay, Kutub, 1947.

8. S. Lakshminarasinha Sastri, *Gitagovinda*, (renderig in English) Madras, V. Rameswar Sastralu & Sons, 1956.

9. A. K.Tripathy, *Sri Jayadeva's Gitagovinda* (English rendering), A Platinum Jubilee Publications, Orissa State Museum, 2008.

**Hindi Translation :**

1. Nagarjuna, *Gitagovinda* (Hindi Prose Trans.), Delhi, Vani Praka'shan, 1979.

2. Kedarnath Sharma, Gitagovindakavyam, Varanasi, Choukhamba Sanskrit Series office

**Assamese Translation :**

1. Rama Sarasvati, *Gitagovinda*, Gauhati, K. Devesar, 1914.

**Malayalam Translation :**

1. K. Achyuta, *Gitagovmda* , Tirpunithura Sanskrit College Committee, 1962.

**Marathi Translation :**

1. Chetoharadeva, *Gitagovinda* (Poetry translation), Poona, Raoji Sadashiv Rasrne, 1888.

**Odia Translation :**

1. Uddhava and Dharanidhar Das, *Gitagovinda*, Odia versification OSM, cat No. Oc/302, Doc. 1905.

2. Bajari Das, *Gitagovinda*, ( Poetry Translation), DOC 1954, OSM, cat No. Dr. M.S. /99.

3. Bhajanananda Das, *Gitagovinda navksari* , Jajpur, 1840.

4. Dharanidhar Das, *Gitagovinda* ( Poetry translation), Cuttack, Aunodaya Press, 1906, Mission Press 1840.

5. Nilamani Mishra, *Gitagovinda*, UKJ, Odisha, Cuttack 1992, Cuttack, Granthamahdir, 1995.

6. Kali charan Pattanaik, *Jayadeve,* Odia, Narayan Pustakalaya, Cuttack, 1946, Das Brothers, Brahmapur, Cuttack.

7. Narayan Pati, *Gitagovinda*, Cuttack, Co-op. Press, 1929.

8. Dukhishyam Pattanaik, *Sri Gitagovinda* ( Prose Translation), Citra, BBSR, 2000.

9. Jagabandhu Mahapatras *Gitagovinda* (Poetry translation), Puri, Sri Ramachandra Mishra, Gudia Sahi, 1939.

**Bengali Translation** :

1. Anand, *Shri Shri Gitagovindam*,( Ed. with metrical and prose translation) Calcutta, Aksaya Library, 1955.

2. Bishveshvar Bhattacharya, *Gitagovinda*, ( poetry translation) Calcutta, Viswakos Press, 1905.

3. Nipendra Krishna Chattopadhyaya, *Sri Sri Gitagovindam*,( text with metrical translation) Calcutta, Dev Sahitya Kutir, 1954.

4. Narahari Das, *Shri Shri Gitagovindam*, Calcutta, Aksaya Press, 1929.

5. Rasamay Das, *Gitagovinda* (with Pujari Goswami's Balabodhini Tippani ) Calcutta, Vidyaratna Press, 1786 (1864).

6. Giridhar Das, *Gitagovinda* (Poetry translation), Calcutta, Shymlal Basak, 1888.

7. Durgadas Lahiri, *Gitagovinda* (Prose translation), Vaishnava Padalahari, Calcutta, 1905.

8. Bijay Chandra Majumdar, *Gitagovinda* ( Poetry Translation), Calcutta, Gurudas Chhatopadhyaya and sons,1905.

9. Shri Ram Majumdar, *Gitagovindam* (Poetry translation), Calcutta, Kamalakanta Press, 1883.

10. Avinash Ch. Mukhopadhyaya, *Gitagovinda* , Calcutta , Gopaldas Mukhopadhyayp, 1961, Calcutta, Lotus Library, 1911.

11. Satish Chandra Ray, *Sri Sri Gitagovinda* ( Poetry translation), Calcutta, Kamal Ptd. works, 1912.

12. Kedarnath Gangopadhyaya, *Gitagovinda* (with Pujari Goswami's tippani and prose translation), Calcutta, Suryodaya Press, 1880.

**अनुकरणग्रन्था:**

काव्यसौन्दर्येण मुग्धै: पण्डितै: गीतगोविन्दमनुसृत्य बहवो ग्रन्था: विरचिता: अभवन्। तेषु कतिपया अध: प्रदीयन्ते —

| ग्रन्था: | | रचयितार: |
|---|---|---|
| गीतगौरीपति: | — | भानुदत्त: |
| गीतगङ्गाधर: | — | कल्पानठाकुर: |
| गीतगिरीश: | — | रामभट्ट: |
| गीतदिगम्वर: | — | वंशमुनि: |
| गीतगोपाल: | — | चतुर्भूज: |
| गीतशङ्करीय: | — | जयनारायण: |
| गीतराघव: | — | श्रीहरिशङ्कर: |
| गीतराघव: | — | प्रभाकर: |
| अभिनवगीतगोविन्दम् | — | पुरुषोत्तमदेव: |
| रामगीतगोविन्दम् | — | श्रीमद्गयादीन् |

श्रीराधागोविन्दकाव्यम् — श्रीराधानन्ददेव:

सङ्गीतमाधव: —

श्रीप्रवोधानन्दसरस्वती

जानकीगीतम् — श्रीहरि: आचार्य:

गोविन्दवल्लभनाटकम् —

श्रीद्वारकानाथठाकुर:

**गीतगोविन्दस्य प्रभाव:**

उत्तरकाले साहित्ये शिल्पे चित्रे च गीतगोविन्दस्य महान् प्रभावो दृश्यते गीतगोविन्दस्य प्रभावेन बहव: कवय: प्रभाविता आसन्। विद्यापते: पदावलीषु गीतगोविन्दस्य प्रभाव: सुस्पष्ट एव। गोविन्ददासोऽपि गीतगोविन्देन प्रभावितोऽभवत्। श्रीधरदासस्य सदुक्तिकर्णामृतम् इति ग्रन्थे कविजयदेवस्य प्रभावोऽस्ति। एतद्विहाय श्रीरामानन्दरायप्रणीतं श्रीजगन्नाथवल्लभम् इति नाटके प्रभावोऽस्ति गीतगोविन्दस्य। एकस्मिन् वसन्तविलास नामके प्राचीनगुजरातीकाव्ये अस्य काव्यस्य परोक्षप्रभाव: परिलक्ष्यते। हिन्दीगुजरातीमैथिलीकाव्येष्वपि गीतगोविन्दस्य महान् प्रभाव: परिलक्ष्यते। ख्रीष्टियचतुर्दशशताव्दीसम्भूतेन विश्वनाथेन तदीये साहित्यदर्पणे (१०/४) गीतिगोविन्दात् श्लोक: उद्धृत: इति दृश्यते।तद्यथा,

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलिकलकलैरुद्गीर्णकर्णज्वरा:।
न्नीयन्ते पथिकै: कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासरा:।। (गीतगोविन्दम्,१/३८)

**शोधप्रवन्धा:**

गीतगोविन्दं प्रति आकृष्टा: सन्त: प्राच्यपाश्चात्यसमालोचका: बहूनि गवेषणाकर्मीणि कुर्वन्ति। गीतगोविन्दमुपरि कृतेषु कार्येषु उल्लेखनीयानि अध: प्रदीयन्ते —

1. *Gitagovinda, Study of Jayadeva from the literary point of view,* Kaushal Kumari, Agra, 1979.
2. *Gitagovinda in Miniature Paintings,* (H) Prem Shankar, Banaras, 1980, Ph.D.

3. *Gitagovinda se Prabhabita Paravarti Samskrta, gitakavyon ka samiksatmaka adhyayana.*(H), Chavara, Ramesh Chander, Indore, 1987, Ph.D.

4. *Gitagovindasamiksa, Sri Jayadeva-viracita, Sarvangasundaritika-sameta*, Mishra, Pramod Chandra, Utkal, 1989, Ph.D.

5. *Gitagovinda-tikayah Srikanthamisra-krtayah padabhava-candrikakhyayah samiksamakam sampadanam.*(S) Hota, Ramesh Chandra, Delhi (RSKS) {Allahabad Campus}, 1989, V. Varidhi.

6. *Gitagovindasya Alankarikam Anusitanam.*(S) Panda, Sudhanshu Shekhar, Delhi (V).

7. *Gitagovinda, Jayadeva-viracita:Prabhava evam parampara,*(H), Agarwal, Nirmal, Jaipur.

**उपसंहार:**

कविजयदेव: न केवलं महाकविर्महासङ्गीतज्ञश्चाप्यासीत्। अस्मिन् गीतिकाव्ये चतुर्विंशति: गीतानि द्वादश रागा: पञ्च तालाश्च सन्ति। गीतगोविन्दे प्रयुक्तं छन्दोऽपि अस्य काव्यस्य सौन्दर्यसाधकत्वेन वर्तते। गीतगोविन्दस्य जीवितभूतं सर्वं गीतमेवापभ्रंशमात्राछन्दसा विरचितम्। कविनास्मिन् काव्ये शार्दूलविक्रीड़ितम्, शिखरिणी, पुष्पिताग्रा, उपेन्द्रवज्रा, वसन्ततिलकम्, मालिनी, वंशस्थविलम्, स्रग्धरा, द्रुतविलम्वितश्चेति छन्दसां व्यवहार: क्रियते। भावमाधुर्येण, ध्वनिवैचित्र्येण, छन्दझंकारेण पदलालित्येन सङ्गीतसुषमया च काव्यमिदमनिर्वचनीयत्वेन देदीप्यते।

आलंकारिका: कवे: काव्यसौन्दर्यसृष्टे: विचित्रचित्रशालायां 9गीतिकाव्यम्" इति नाम्ना विशेषकाव्यप्रभेदमेकं स्वीकुर्वन्ति। मनुष्यजीवनस्य सुखं दु:खमाशा निराशा चेत्यादिनी बहुविधानि इन्द्रियवेद्यानि गीतिकाव्यस्य वैशिष्ट्यानीति मन्यन्ते साहित्यसमालोचका:। इयं गीतिकविता चित्रमिव रमणीया गीतमिव मधुरापि। इयमेव शिल्पिन: शिल्पकर्मण: चित्रितैका विशिष्टभावनैव। अस्या गीतिकाव्यधाराया अन्तिमं फलं हि महाकवे: जयदेवस्य गीतगोविन्दमिति काव्यम्। अस्मिन् गीतिकाव्ये कविजयदेव: न केवलं महाकविरिति चित्रकरोऽपीति प्रतिभाति।

**सहायकपुस्तकतालिका:**

1. Dasgupta, P.K. *Jayadeva and Some of his Contemporaries.* Calcutta: 1982.

2. De, S. K. *Begal's Contribution to Sanskrit Literature.* Calcutta 1960.
3. De, S.K. *Early History of Vaisnava Faith and Movement in Bengal.* Calcutta : 1961
4. Jones, William. *Gitagovinda or Song of Jayadeva.* Calcutta: 1894.
5. Kane, P.V. *History of Sanskrit Poetry.* Bombay :
6 Mukherjee, S.K. *Kavi Jayadeva and Gitagovinda.* New Delhi: Sahllya Akademi, 1973.

७. गोस्वामि, श्रीकृष्णचरण. *श्री श्री गीतगोविन्दम्.* कलिकाता: वैदिकपुस्तकालय, १४००।

८. मुखोपाध्याय, हरेकृष्ण. *कविजयदेव ओ श्रीगीतगोविन्द.* कलिकाता: दे"ज पावलिशिं, १४१७।

९. राय, नीराररञ्जन. *वाङ्गालीर इतिहास.* कलिकाता: दे"ज पावलिशिं, १४००।

१०. वन्द्योपाध्याय, श्रीसुरेशचन्द्र. *संस्कृत साहित्येर इतिहास.* कलिकाता: ए. मुखार्जी आण्ड कोम्पानी प्राइभेट लि:, १३८९।

११. वन्द्योपाध्याय, श्रीसुरेशाचन्द्र. *संस्कृत साहित्ये वाङ्गालीर दान.* कलिकाता: संस्कृत पुस्तक भाण्डार, १३६९।


SACT, Sanskrit
Kharagpur College
West Bengal

## मेघदूतस्य नवरूपायनम्

डॉ. जगमोहन आचार्य:

उपक्रम:

कालिदासस्य साहित्यसरित् सदैव नित्यनूतनताया: वारिधारां नीत्वा प्रवहमाना भवति। संस्कृतसाहित्ये तस्य प्रभाव: नास्ति संदेह: किन्तु इतरप्रान्तीयभाषायां तस्य प्राधान्यम् इतोऽपि वर्तते। विश्वगुरु रवीन्द्रनाथस्य साहित्ये कालिदासस्य प्रभाव: सुगभीर:। कालिदासस्य ध्वनि: संयोजना रवीन्द्रस्य मनसि तरङ्गिता । कालिदासस्य साहित्ये रवीन्द्र: अभिभूत: सम्मोहित:। वाल्यत: रवीन्द्र: कालिदासाहित्यानुरागी आसीत्।

रवीन्द्रनाथ: न केवलं वङ्गभाषायां कवि: अपितु कालिदासादनन्तरं आधुनिकभारतस्य कवि:। कालिदासेन सह रवीन्द्रनाथस्य सजातीयत्व लक्षते। सेकाल" कवितायां रवीन्द्रनाथेनोक्तम्,-

आमि यदि जन्म नितेन कालिदासेर काले
दैवे हतेम दशमरत्न नवरत्नेर माले,
एकटि श्लोके स्तुतिगेये वाजार काछे निताम चेये
उज्जयिनीर विजन प्रान्ते कानन घेरा वाडि।

रवीन्द्रनाथ: कालिदासं मानसलोकस्य कवि: वदति। मानसोऽयम् कैलासशृङ्गस्य मानसलोक: तथा मानवानां मानसलोकं एव। रवीन्द्रस्य भाषायाम्-

मानसकैलाशशृङ्गे निर्जनभुवने
छिलेतुमि महेशेर मन्दिर प्राङ्गणे
ताँहार आपन कवि, कवि कालिदास। (मानसलोक, चैतालि)

महाकवे: मेघदूतस्य प्रभावेण विशेषानुप्राणित: रवीन्द्रनाथ:। तस्य मानसी" काव्ये तथा 9चैताली" काव्ये मेघदूतनाम्ना कविताद्वयं प्राप्यते। पुन: मेघदूतनाम्ना प्रबन्ध: अपि तेन प्राचीनसाहित्य इति ग्रन्थे रचित:। कविताप्रबन्धयो: विषगतसमानता कालिदासस्य मेघदूतेन सह अस्ति। कालिदासस्य मेघदूतम् अनन्यसाधारणम्। मेघदूतकाव्यस्य चित्रावली तथा शब्दैश्वर्यं माधुर्यं च रवीन्द्रनाथस्य चित्तमाकर्षयति। वर्षासु जाह्नवी यथा सर्वत: जलधारा माहृत्य समुद्रे मिलति तथैव कालिदासस्य मेघदूतम् सकलविरहिजनानां कष्टं विरहिणी समीपं प्रापयति।

मेघदूतसंपर्के रवीन्द्रनाथस्यानन्यचिन्तनम्। वाल्यकालादेव रवीन्द्र: अग्रजस्य मुखात् मेघदूतस्य श्लोकं श्रुतवान्। तत: एव मेघदूतस्योपरि आकृष्ट:। आषाढस्य प्रथमदिवसे...श्लोकं श्रुत्वा प्राचीनकालस्य घनवर्षणस्य चित्रं रवीन्द्रस्य मनसि उद्भासितम्। रवीन्द्र: कालिदासस्य श्लोकं सञ्जिवनीमन्त्रैव अनुभवन्ति। आषाढस्य वर्षा प्रतिवर्षमागच्छति किन्तु वर्षां नीत्वा जीवन्तभावनाया:

परिप्रकाश: कालिदासेनैव कर्तुं शक्यते। प्रथमवारिवर्षणं, विद्युतालोकादि कालिदाससमयस्य भावना भूत्वापि संप्रति हृदि विस्मयमिश्रितव्याकुलता जनयति। रवीन्द्रस्य भाषायाम्,-

यखन सेइ आषाढ सेइ नववर्षा, सेइ चकित विद्युतेर कथा प्राचीनश्लोकेरमध्ये देखिते पाउया याय तखन हृदयेरमध्ये एकप्रकारविस्मय मिश्रित व्याकुलता जन्मे। सेदिनकार वर्षा एवं वर्षाविष्टित मानवहृदय मनेरमध्ये अस्पष्ट आलोक जीवित हइया उठे। कविरश्लोक सेइ सञ्जीवनीमन्त्र।" (मेघदूत, प्राचीनसाहित्य)

**उज्जयिनी**

कालिदास: मेघं उज्जयिनीं विहाय अन्यत्र नेच्छति। उज्जयिनी कालिदासस्य प्रियनगरी। तद्यथा,-

वक्र: पन्था यदपि भवत: प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्या:।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानं
लोलापाङ्गैर्यदि न रमसे लोचनैर्वाञ्चितोऽसि। (मेघदूतम्, पूर्वमेघ:, २८)

रवीन्द्रनाथोऽपि उज्जयिनीं न विस्मरति। रहस्यमायी उज्जयिनी रवीन्द्रं सौन्दर्येणाकर्षयति। कालिदाकालीनाम् उज्जयिनीं रवीन्द्रनाथ: स्मरति। रवीन्द्रस्य भाषायाम्,-

सेदिन से उज्जयिनीप्रासाद शिखरे
कि ना जानि घनघटा विद्युत् उत्सव
उद्दाम पवनवेग गुरुगुरु रव। (मेघदूत, मानसी)

एकदा श्यामवङ्गदेशे वर्षाकाले रवीन्द्रनाथ: स्वगृहे एकाकी मेघदूतं पठति। पठनसमये कालिदासवर्णितानां स्थानानं चित्राणि मानसि आगच्छन्ति। आम्रकूट, वेत्रवतीकूलं, दशार्णग्रामं, अवन्तीपुरी, उज्जीयिनी, निर्बिन्ध्या, शिप्रा, कनखलादि स्थानं। स्थानानां चित्रं रवीन्द्रनाथ: 9मानसा"स्थ मेघदूते सम्यगालोचयति। यथा,-

कोथाआछे
सानुमानचित्रकूट, कोथा रहियाछे
विमल विशीर्ण रेवा विन्ध्यपदमूले
उपलव्यथितगति: वेत्रवतीकूले
परिणतफलश्याम जम्वुवनच्छाये
कोथाय दशार्ण ग्राम रयेछे लुकाये
प्रस्फुटित केतकीर वेडा देये घेरा
पथतरुशखे कोथा ग्रामविहङ्गेरा
वर्षाय वाँधिछे नीड, कलरवेघिरे

वनस्पति। (मेघदूत, मानसी)

कालिदासस्य मेघदूतवर्णितस्य प्राचीनसौन्दर्यश्री: वर्धयन्त: आम्रकूटदशार्णादिषु रवीन्द्रनाथ:वाह्यदर्शनं विहाय अन्त: दर्शनं करोति, तद्दर्शनं अलौकिकं अपरिवर्तनीयं च।

**यूथिका-पुष्पलावीमुखम्**

वननदीतीरजातानि उपवनस्य यूथिकाजातकानि नवजलकणै: अभिसिञ्चन् तत्रत्यानां पुष्पलावीमुखानां छायादानात् तासाम् क्षणपरिचयं भवितुं मेघरुच्यते। ता: आतपेन क्लान्तियुक्ता पुन: लुनन्त्य: क्लान्ता:। मुखानि म्लानानि। कर्णोत्पलानाम् मालिन्यमपि स्यात्।

मेघदूते कालिदास: लिखति,-

विश्रान्त: सन्व्रज वननदीतीरजातानि सिञ्च-
न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि।
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात्क्षणपरिचित: पुष्पलावीमुखानाम्।।(मेघदूतम्, पूर्वमेघ:,२७)

रवीन्द्रनाथ: मानसीस्थ मेघदूते तथैवालोचयति।

ना जानि से कोन् नदीतीरे
यूथीवनविहारिणी वनाङ्गना फिरे
तप्त कपोलेर तापे क्लान्त कर्णोत्पल
मेघेर छायार लागि हतेछे विकल। (मेघदूत, मानसी)

**कृषि:**

मेघस्योपरि कृषि: निर्भरशील:। मेघस्यागमं द्रष्टुं सर्वे चातकप्राय:। मेघस्य गगने आविर्भावं सरला ग्रामाङ्गना: नेत्रै: सतृष्णं अवलोकयन्ति। कालिदास: लिखति,-

तस्यायत्तं कृषिफलमिति भ्रूविकारानभिज्ञै:
प्रीतिस्निग्धैर्जनपदवधूलोचनै: पीयमान:।
सद्य: सीरोत्कषणसुरभि क्षेत्रमारुह्य मालृं
किंचित्पश्चाद् व्रज लघुगतिभूय एवोत्तरेण।। (मेघदूतम्, पूर्वमेघ:, १६)

विषयेऽस्मिन् रवीन्द्रनाथ: समानतां नीत्वा अनुरूपं प्रतिफलनं करोति।

भ्रूविलास शेखे नाइ कारा सेइ नारी
जनपद वधूजन गगने नेहारि
घनघटा ऊर्ध्वनेत्रे चाहे मेघ पाने
घननील छाया पडे सुनील नयने। (मेघदूत, मानसी)

**गमनम्**

मेघस्य गगनमण्डले गमनस्यापूर्वदृश्यं वीथ्यां मुग्धसिद्धाङ्गना: चिन्तयन्ति पवन: किं पर्वतशृङ्गं उत्पाट्य हरति ? इत्थं विचिन्त्य ता: ऊर्ध्वं अवलोकयन्ति। कालिदास: यथा,-

अद्रे: शृङ्गं हरति पवन: किंस्विदित्युन्मुखीभि
दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभि:।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुख: खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्।।(मेघदूतम्, पूर्वमेघ:, १४)

प्रसङ्गेऽस्मिन् रवीन्द्रनाथ: सादृश्यतां नीत्वा नूतनताया: परिप्रकाशं कुर्वन्ति।

कोन् मेघश्यामशैले मुग्ध सिद्धाङ्गना
स्निग्ध नवघन हेरि आछिल जन्मना
शिलातले, सहसा आसिते महाझड
सम्वरि वसन फरे गुहाश्रय खुँजि
वले, मा गो गिरि शृङ्ग उडाइल वुझि (मेघदूत, मानसी)

**जाह्नवी**

हिमालयादवतीर्णा सगरराजपुत्राणां स्वर्गप्राप्ते: साधनभूतां जह्नो: कन्यां जाह्नवीं द्रष्टुं कुरुक्षेत्रात् कनखलमार्गे मेघं मार्गं दर्शयति यक्ष:। सा जाह्नवी स्वीयफेनै: पार्वती विहस्य शम्भो: केशग्रहणं कृतवती इति कालिदास:। यथा,-

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नो: कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम्।
गौरीवक्त्रभ्रूकुटिरचनां या विहस्येव फेनै:
शंभो: केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता।। (मेघदूतम्, पूर्वमेघ:, ५४)

रवीन्द्र: जह्नोकन्या यौवनचञ्चला इति विचिन्त्य तथैव उपस्थापयति। यथा,-

कोथा कनखल
येथा सेइ जह्नुकन्या जौवनचञ्चल
घौरीर भ्रूकुटिभङ्गि करि अवहेला
फेनपरिहासछले करितेछे खेला
लये धूर्जटिर जटा चन्द्रकरोज्ज्वल। (मानसी, मेघदूत)

**अलका**

अलकानगरीं रवीन्द्रनाथ: मोक्षपुरीति स्वीकरोति। मेघस्य पृष्ठे उपविश्य रवीन्द्रनाथस्य मन: देशे देशे भ्रमति अन्ततोगत्वा तस्य हृदि कामनाया: मोक्षधाम अलकापुरी विराजमाना भवति। यथा,-

कामना मोक्षधाम अलका एव। अलकायाम् एव कामनाया: चरितार्थ: भवति। नायकस्य कैलासस्य अङ्के नायिका सूक्ष्मवस्त्रधारी अलका उपविष्टा:। कवे: उक्तिर्यथा,-

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलाम्
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन्।
या व: काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम्।। (मेघदूतम्, पूर्वमेघ:, ६६)

उत्तरमेघे कालिदास: अलकानगर्यां सुन्दरतया चित्रणं करोति।

(उत्तरमेघ:, ३,१६)

रवीन्द्रनाथ: कालिदासस्यानुरूपं अलकानगरी लक्ष्म्या: विलासपुरी अमरभुवनमिति चिन्तयति। तत्रैव अनन्तवसन्त: तथा चिरं पुष्पवनम्। चन्द्रालोक: सदा आनन्ददायक:। सरोवरे सुवर्णसरोज: प्रस्फुटितम्। अत: एतादृशी कामोत्पादकाम् नगरीत: विरह: कष्टदायक:। रवीन्द्रस्य भाषायाम्,-

सेथा के पारित
लये येते तुमि छाडा करि अवारित
लक्ष्मीर विलासपुरी-अमरभूवने
अनन्तवसन्ते येथा नित्य पुष्पवने
नित्य चन्द्रालोके, इन्द्रनीलशैलमूले
सुवर्णसरोजफुल्ल सरोवरकूले
मणिहर्म्ये असीम सम्पदे निगमना
कान्दितेछे एकाकिनी विरहवेदना। (मेघदूत, मानसी)

**विरहिणी**

कालिदास: विरहिणीं यक्षवधुं जगत्स्रष्टु: आदिसृष्टि: इति चिन्तयति। तस्या: सौन्दर्यश्री: सदैव कामुकान् आकर्षयति। कालिदासेन वर्णयति, यथा,-

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहतिणीप्रेक्षणा निम्ननाभि:।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्यद्युवतिविषये सृष्टिराद्येव धातु:।( उत्तरमेघ:, २९)

रवीन्द्रनाथोऽपि यक्षस्य प्रियां सौन्दर्यस्यादिसृ्ं स्वीकरोति। यथा,-

विरहिणी प्रियतमा येथाय वेराजे
सौन्दर्येर आदिसृष्टि- (मेघदूत, मानसी)

यक्षवधू: क्षीणा, विरहशय्यायां एकपार्श्वेन शयिता, प्राचीप्रान्ते यथा चन्द्रकलाया: रूपं तथैव कृशतनू:, सुरतक्रीडाविरहेण तस्या: रजनी न अतिवाहिता भवति, उष्णै: अश्रुभि: तिष्ठति। यथा,-

आधिक्षामा विरहशयने सन्निषण्णैकपार्श्वाम्
प्राचीमूले तनूमिव कलामात्रशेषां हिमांशो:।
नीता रात्रि: क्षण इव मया सार्द्धमिच्छारतैर्या
तामेवोष्णर्विरहमहतीमश्रुभिर्यापयन्तीम्।। (उत्तरमेघ:, २८)

मानसीस्थ मेघदूतकवितायां रवीन्द्र: विरहिण्या: वर्णनं तथैव करोति। यथा,-

मुक्तवातायन हते याय तारे देखा-
शय्याप्रान्ते लीनतनु क्षीण शशीरेखा
पूर्वगगनेर मूले येन अस्तप्राय। (मेघदूत, मानसी)

**उपसंहार:**

रवीन्द्रनाथ: कालिदासस्य मेघदूतं पठित्वा विरहस्य चित्रं ज्ञात्वा वेदनात: मुक्तिं प्राप्तवान्। कालिदासस्य विरहवेदना रवीन्द्रनाथम् अभिभूतं करोति। मेघ-यक्ष-यक्षवधु प्रमुखास्तु सामान्यं माध्यममात्रं किन्तु तेभ्य: य: विरह: प्रस्फुटित: सस्तु चिरन्तनसौन्दर्यस्यैव प्रतिफलनम्। साक्षात् स्वर्ग इव अविनाशी।

एकवर्षादनन्तरं मिलनं भविष्यति किन्तु काव्यस्य समाप्ति:। यदि मिलनेन स्यात् तर्हि विरहस्य गुरुत्वं तथा न भवेत् यथा मिलनावर्णनात्।

रवीन्द्रनाथ: तस्य मेघदूतकवितायां प्रब
न्धेऽपि कालिसस्य भावनां पूर्णतां नेतुं प्रयत्नं कृतवान्। मानसीस्थ मेघदूतकविताया: अन्तिमे रवीन्द्रनाथ: अभिनव तात्पर्यं आविष्करोति। यथा,-

भावितेछि अर्धरात्रि अनिद्रनयान-
के दियेछे हेन शाप केन व्यवधान ?
केन ऊर्ध्वे चेये काँदे रुद्ध मनोरथ ?
केन प्रेम आपनार नाहि पाय पथ ? (मेघदूत, मानसी)

रवीन्द्रनीथ: मेघदूत कविताद्वारा मानवजीवनस्य चिरन्तनहृदयानुभूतिं उपस्थापयति। प्रेमैक अनन्तप्रवाह:। मानवहृदयस्य शाश्वती तथा शुद्धावेगधारा। मानसीकाव्यस्य मेघदूतकविता असामान्यसृजनशीलताया: प्रतीकात्मिका।

विश्वकविरवीन्द्रनाथस्य संस्कृतसाहित्यं प्रति श्रद्धा अनन्या। कविगुरु: कालिदास: कविगुरु: रवीन्द्रनाथ:। कालस्य भिन्नतामात्रम्। महाकवि कालिदासस्य मेघदूतस्य प्रभाव: रवीन्द्रनसथस्य मेघदूतकविता प्रवन्धे तस्य निदर्शनम्।

**सहायकग्रन्था:**

१. The Meghaduta of Kalidasa, Gopal Raghunath Nandargikar, Bharatiya Book Corporation, Delhi, 1979
२. Megahadutam, Gopal Krishna Dash and Kadambini Dash, Santosh Publications, Cuttack, 1994
३. Kalidash the human meaning of his work, Water Ruben, Akademie – Verlag, Berlin, 1957
४. Trayi, (B) Sashibhusan Dasgupta, Supreme publishers, Kolkata
५. Pracina Sahitya, Rabindranath Tagore, Visvabarati, Kolkata
६. Sancayita, Rabindranath Tagore, Visvabharati, Kolkata

सहायकाचार्य:
खड्गपुर महाविद्यालय: पश्चिमवङ्गम

# पुराणलक्षणम्

**डॉ.लक्ष्मीकान्त षडङ्गी**

**उपक्रमः –**

"पुराणं परमाग्नेयं ब्रह्मविद्याक्षरं परमुह्म इत्यक्त्यनुसारं विदन्त्येव विपश्चितः भारतीयवाङ्मयं प्रति पुराणानामवदानं नितरामेवोपादेयं महत्त्वपूर्णञ्च विद्यते । अस्मिन्नपि युगे भारतीयधर्मस्य मूलाधार इदमेव पौराणिकं साहित्यमस्ति । अस्मादेव कारणात् भारतीये वाङ्मये पुराणानां कृते एकं विशिष्टस्थानमस्ति । प्रत्यच्यशिक्षाप्रभावात् केचित् विद्वांसोऽपि पुराणानि अपेक्षमाणदृष्ट्या प्रेक्षन्ते । परन्तु महतो हर्षस्य विषयोऽयं यत् साम्प्रतं भारतीयाः जनाः पुराणानां महत्त्वं विज्ञाय अष्टादशपुराणानि भारतीयवाङ्मये अष्टादशसमुज्ज्वलरत्नदृशानि इति स्वीकुर्वन्ति । अष्टादशपुराणेषु नास्ति एकमपि एवंभूतं पुराणां यत्र ज्ञानस्य विज्ञानस्य वा न्यूनता स्यात् ।

**पुराणशब्दस्य व्युत्पत्तिः –**

सत्स्वपि ज्ञानस्य विज्ञानस्य च महत्त्वे एतस्य पुराणस्य कश्चास्य व्युत्पत्तिः किं तावत् लक्षणम् इति समृज्यमाणे प्रश्ने उच्यते – "पुरति अग्रे गच्छतीति पुरा, तुदादि गणपठितात् पुर अग्रगमने इति धातोः औणादिके काप्रत्यये कृते पुराशब्दो निष्पद्यते, योऽव्ययो मन्यते, कोषग्रन्थानुसारं च स त्रिषु अर्थेषु प्रयुज्यते – प्रबन्धेऽतीतकाले संकटे च ।

तथाहि – **स्यात् प्रबन्धे पुरातीते संकाटागमिके तथा ।**[१]

पुरा पूर्वकाद् दैवादिकादन प्राणने इति धातोः पचाद्यचि कृते पुराणशब्दो निष्पद्यते । वा पुरा पुरातनम् अनिति जीवनं बोधयति इति पुराणं ग्रन्थविशेषः, पुरा पूर्वकात् आदादिकात् अन् प्राणने इति धातोरचि णत्वे च कृते पुराणशब्दो निष्पद्यते ।

**प्राच्यानां पुराणस्वरूपम् –**

यद्यपि पुराणशब्दस्य पर्यायवाचिनः प्रत्न-पतन-पुरातन-चिरन्तनादयः शब्दाः सन्ति, तथापि अत्र पुरा शब्देन प्राचीनाख्यायिकादियुक्ता महर्षिव्यासद्वारा निर्मिता अष्टादशग्रन्थविशेषा एव ज्ञायन्ते । यदि पुराणं कश्चिद् नवीनं कथं तर्हि स एव कथयितुमुद्यतो भविष्यति, यस्य पूर्वोक्तानां व्युत्पत्तीनां ज्ञानं नास्ति । संस्कृतसाहित्यस्य सर्वे ग्रन्थकाराः इममेव स्वीकुर्वन्ति तथा स्वं पुराणान्यपि अस्यैवार्थस्य मान्यतां प्रददति तथाहि मत्स्यपुराणम् – "पुरातनस्य कल्पस्य पुराणादि विदुर्बुधाः[२]ठ। वायुपुराणमपि प्राचीनकालतोऽद्यावधि जीवितं साहित्यमेव पुराणं मन्यते ।

**"यस्मात् पुरा ह्यनतीदं पुराणं तेन तत् स्मृतम्[३]।**
**निरुक्तस्य यो वेद सर्वपापै: प्रमुच्यते ।।**

पद्मपुराणानुसारं प्राचीनानां परम्परां प्रकाशयितुं समर्थशास्त्रमेव पुराणमुच्यते ।

**"पुरा परम्परां व्यक्तिं पुराणं तेन वै स्मृतम्[४]।**

ब्रह्माण्डपुराणे तु इतो भिन्नैव व्युत्पत्तिरुपलभ्यते – पुरा एतदभूत् अर्थात् प्राचीनकाले इदृगासीत् । अत एतत् पुराणमुच्यते ।

**"यस्मात् पुरा ह्यभूच्चैतत् पुराणं तेन तत् स्मृतम्[५]।**

एवं विभिन्नेषु पुराणेषु कृतायां व्युत्पत्तौ ध्यानप्रदानेन प्रतीयते, यत् पुराणस्य वर्ण्यविषया: प्राचीनकालत: समारभ्य सन्ति । अमरकोषे अमरसिंहेन यल्लक्षणमितिहासस्य कृतं तदेव लक्षणं नीलकण्ठेन महाभारतटीकायां पुराणस्य कृतं विद्यते । यथा – इतिहास: पुरावृत्तम्[६]। पुराणं पुरावृत्तम् ।

**अत्रायं निष्कर्ष: –**

पुराशब्दस्य तात्पर्यमस्ति यत् पुराणं तदपि नवीनमस्ति । अर्थात् यत् शास्त्रं पुरातनस्य वर्णनं विदधत् वर्त्तमानां भविष्यन्तीं च घटनां वर्णयति तदस्ति पुराणम् । यच्च शास्त्रं केवलं प्राचीनानामेव घटनानां वर्णनं करोति सोऽस्ति इतिहास: ।

पुनश्च "पुराणम्ह्व इति कथनेन केचन मन्यन्ते यत् – "पुराभवं पुराणम्ह्व इति । अर्थात् यदेव शास्त्रं प्राचीनं तदेव पुराणमुच्यते । एवमपि केषाञ्चित् मतानुसारं "पुरणात् पुराणम्ह्व अर्थात् यदेव पूरयति तदेव पुराणमुच्यते । अत्र किमेव पूरयति ? इति प्रश्नेन उच्यते यदेव वेदार्थं परिपूरयति परिपोषयति वा तदेव पुराणम् । वेद: सुप्राचीन: । अस्य कियदंश: "क्लिष्टह्व इति हेतो: परवर्त्तीकाले साधारणमनुष्याणां सहजबोधगम्याय पुराणस्याविर्भाव: घटते । अत उच्यते – "इतिहासपुराणाभ्यां वेदं समुपवृंहयेत्[७]ठ इति । एवं प्रकारेण यद्यपि पुराणस्य विभिन्नानि व्युत्पत्तिलभ्यानि अर्थानि प्रचलन्ति तथाऽपि प्रकृतिदृष्ट्या तस्य लक्षणं भिन्नप्रकारेण परिकल्पितमस्ति । यथा –

**"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।**
**वंशानुचरितं चैव पुराणं पञ्चलक्षणम् ।।[८]**

अर्थात् यस्मिन् ग्रन्थे सृष्टि-प्रलय-प्रसिद्धराजवंशपरम्परा-मनुष्यव्यक्तिगतचरित्रादि-पञ्चविषया: वर्णिता: सन्ति स एव पुराणमित्युच्यते । अयं प्रसङ्ग: विष्णुपुराणे ब्रह्माण्डपुराणेऽपि परिलक्ष्यते ।

पुराणस्य एतल्लक्षणं किञ्चित्पाठान्तरेण सह येषु पुराणेषु वर्त्तते, तानि पुराणानि यथा – विष्णुपुराणे[९], मार्कण्डेयपुराणे[१०], अग्निपुराणे[११], भविष्यपुराणे[१२], ब्रह्मवैवर्त्तपुराणे[१३], वराहपुराणे[१४], स्कन्दपुराणस्य प्रभासखण्डे[१५], कूर्मपुराणस्य पूर्वार्द्धे[१६], मत्स्यपुराणे[१७], गरुडपुराणस्य आचारकाण्डे[१८], ब्रह्माण्डपुराणस्य प्रक्रियापादे[१९], शिवपुराणस्य वायवीयसंहितायाम्[२०] इत्यादौ । परन्तु श्रीमद्भागवतादिषु ग्रन्थेषु पुराणस्य दशलक्षणं प्रतिपादितमस्ति । यथा –

**सर्गश्चाथ विसर्गश्च वृत्तिः रक्षान्तराणि च ।**
**वंशो वंशानुचरितं संस्था हेतुरूपाश्रयः ।।**[२१]

अर्थात् पुराणं दशलक्षणं भवति । यथा – सर्गः, विसर्गः, वृत्तिः, रक्षा, अन्तराणि, वंशः, वंशानुचरितम्, संस्था, हेतुः, उपाश्रयश्च । पुनश्च भागवतस्य द्वितीयस्कन्धेऽपि पुराणस्य दशलक्षणमुक्तमस्ति, तद्यथा –

**अत्र सर्गा विसर्गश्च स्थानं पोषणमूतयः ।**
**मन्वन्तरेशानुकथा निरोधा मुक्तिराश्रयः ।।**[२२]

अनेन श्लोकेनोक्तानि नामानि यथा – सर्गः, विसर्गः, स्थानम्, पोषणम्, ऊतयः, मन्वन्तरम्, ईशानुकथा, निरोधः, मुक्तिः, आश्रयश्च ।

**निष्कर्षः –** अत्रोभयोः प्रतिपादितानि नामानि यद्यपि समानानि न सन्ति तथाऽपि तेषां भावः समानोऽस्ति ।

**पाश्चात्यानां पुराणलक्षणम् –**

पुराणविषयमवलम्ब्य प्राच्यानामिव पाश्चात्यविद्वांसोऽपि अनुरुपमतं प्रतिपादयन्ति । वैदिकयुगस्य उत्तरकाले आर्य-अनार्यसंस्कृतेः समन्वयेन भारतवर्षे हिन्दुजातेः धर्मेतिहासः विद्यमानः आसीत् । जातेः धर्मः एव पौराणिकधर्मः । Winternitz कथयति – "They offerd us a far greater insight into all aspect and phases of Hinduism - its mythology, its idol-worship, its theism and pantheism, its love of God, its philosophy and superstition, its festivals and aremonies and its ethics than any other works[१३], एतस्मात् प्रतीयते यत् हिन्दुजातेः धर्मेतिहासे पुराणस्य महत्त्वम् अपरिसीममासीत् ।

पुनश्च इतिहासपुराणयोः पार्थक्यं निर्द्दिश्य मोनियार् उइलियम्स् कथयति – "It is ture that the latter furnish the raw materials for the composition of the Puranas, but, not withstanding their relationship, the two

clases of works are very different. The Itihsasa are the legendary histories of heroic men before they are actually deified, whereas the Puranas are properly the history of the same heroes converted in to positive Gods, and made to occupy the highest position in the Hindu pantheon”[२४] ।

अनेन सुस्पष्टं प्रतीयते यत् पुराणम् इतिहासं सम्यक्रूपेण पृथकीकरणं कष्टसाध्यम् । प्रसङ्गेऽस्मिन् पाश्चात्यसमीक्षक: Pargiter अपि कथयति – “Purana means an ‘old tale’ or ‘ancient love’ generally, and Itihasa would seem properly to denote a story of fact in accordance with its derivation ‘iti ha asa’, which rather denotes actual traditional history. But the line between fact and fable was hardly definite and gradually became blurred, especially where the historical sense was lacking and so no clear distinction was made, particularly in brahminic additions to the Puranas. Hence both words tended to become indefinite”[२५] ।

Gold Stukar महोदय: कथयति – “The word itslef as designating a class of writings, occurs as early as in the law-books of Manu, though this book itself, as we have seen, may be called recent when compared with the Vedic text. A definition, however, of what such Puranas are does not occur before the begining of Christian era, when the Lexicographer Amarsingha says, ‘that a Purana is a work which has five characteristic marks’. this definition is again explained by the commentators on the glossory of Amarsingha; and the oldes of them did not live earlier that about four hunderd years ago.”[२६] ।

**उपसंहार: –**

प्रधानतया पुराणेषु सर्ग-प्रतिसर्ग-वंश-मन्वन्तर-वंशानुचरितेति पञ्चलक्षणमादाय मानवजीवनस्य चरमलक्ष्यं परमपुरुषार्थात् धर्मार्थकाममोक्षान् ऐतिहासिककथानामाधारेण प्रभावपूर्णपद्धतौ ज्ञानविज्ञानयो: विस्तार: प्रदर्शित: । पुराणेषु यावत् सुगमं चतुर्वर्गस्य सिद्धे: साधनमुपलभ्यते न तावदन्यत्र क्वचन प्राप्यते । महर्षिणा व्यासेन अष्टादश धर्माणां सार: परोपकार: पुण्यं परपीडनं च महत्पापं निर्दिष्टमस्तीति शम् ।

पादटीका :

1. कोषशास्त्रे, 1.6
2. मत्स्यपुराणे, 53.71
3. वायुपुराणे, 1.103
4. पद्मपुराणे-सृष्टिखण्डे, 1.5
5. ब्रह्माण्डपुराणे, 1.7
6. अमरकोषे, 1.6(4-5)
7. संस्कृतनिबन्धशतकम्, P-25
8. वायुपुराणे, 40.11, मत्स्यपुराणे, 53.65
9. विष्णुपुराणे, 3.6.23
10. मार्कण्डेयपुराणे, 243.73
11. अग्नियपुराणे, 7.76
12. भविष्यपुराणे, 2.5
13. ब्रह्मवैवर्त्तपुराणे, 733.6
14. वराहपुराणे, 2.4
15. स्कन्दपुराणस्य प्रभासखण्डे, 2.84
16. कूर्मपुराणस्य पूर्वार्द्धे, 7.72
17. मत्स्यपुराणे, 43.64
18. गरुडपुराणस्य आचारकाण्डे, 2.28
19. ब्रह्माण्डपुराणस्य प्रक्रियापादे, 7.39
20. शिवपुराणस्य वायवीयसंहितायां, 9.49
21. श्रीमद्भागवते, भाग.92.7.8
22. श्रीमद्भागवते, भाग.2.50
23. HIL. VOL.1, P-521
24. Hinduism, P-82
25. Ancient Indian Historical Tradition - F.E.Pargiter, Chap-III, P.34, OUP, Lond., 1922
26. Inspired writings of Hinduism, P-107

संस्कृतविभागाध्यक्षः,
योगदा-सत्सङ्ग-पालपाडा-महाविद्यालयः

## प्रकृतिकवि: कालिदास:

डा. मिठु रानी मइश

**उपक्रम :**

कालिदास: संस्कृतकाव्यसाहित्यस्य अद्वितीय: कवि:। कविषु कविकालिदास: श्रेष्ठ:। नाटकेषु महाकविकालिदासेन विरचितम् 9अभिज्ञानशकुन्तलम्" नाटकं श्रेष्ठम्। "गुणिषु न च लिङ्गं न च वय:ह्ल[१] इति सूक्तिप्रमाणात् तेषां गुणानामेव प्रभाव: समस्तं भूतलं तरलीकरोति। न हि केवलं भारतीया: वैदेशिका: अपि कालिदासस्य महत्त्वं वैशिष्ट्यं च आलोचयन्ति। अस्मिन् नाटके भावस्य गरिमा, पदस्य माधुर्यम्, अर्थस्य सौष्टवम्, अलंकारस्य मञ्जुलतादि सहृदयानां हृदि आन्दोलयति। कालिदासस्य काव्यानां यथा ख्याति: तथैव ख्याति: प्रकृतिभावनाया:।

**आश्रमवर्णना**

मृगानुसरन् दुष्यन्त: वने भ्रमित्वा भ्रमित्वा कण्वमुने: आश्रमसमीपं आगत:। वैखानसस्य उक्ति: सूचयति दुष्यन्त: कण्वस्य आश्रममागत:।[२] आश्रमस्य स्वरूपम्, आश्रमस्य परिवेशमेव प्रकाशयति। कालिदास: दुष्यन्तस्य मुखे आश्रमस्य अवस्थितिं सूचयति। तद्यथा—

नीवारा: शुकगर्भकोटरमुखभ्रष्टास्तरूणामध:
प्रस्निग्धा: क्वचिदिङ्गुदीफलभिद: सूच्यन्त एवोपला:
विश्वासोपगमादभिन्नगतय: शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिस्यन्दरेखाङ्किता:।३

शुकगर्भकोटरात् विहगा: मुखभ्रष्टात् नीवारा: धान्यं आश्रमं पुरत: पातयन्ति। इङ्गुदीफलानि आश्रमस्य प्रवेशपथे विक्षिप्तरूपेण पतिता: ।आश्रममृगा: रथशव्दं श्रुयन्ते अपि, तत्स्थानं न परित्यजन्ति:। मुनय: स्नानाय जलाशयं गच्छन्ति। तेषां वल्कलस्य जलस्रवणं आश्रमाय गन्तुं मार्ग: अङ्कित:। आश्रममतीव शान्त: मनोहारी च, आश्रमवासिनां स्वभावोऽपि शान्त: आसीत्। तद्यथा,

शमप्रधानेषु तपोधनेषु गूढ़ं हि दाहात्मकमस्ति तेज:।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवाद् वमन्ति।[४]

चतुर्थाङ्के शकुन्तला पतिगृहगमनसमये आश्रमवासिन:, अनसूयाप्रभृतिभि:, शकुन्तलाया: कृते य: आनन्द:, या च चिन्ता अवलोक्यन्ते, लौकिकेषु सामाजिकेषु अपि तादृश: मनोस्थिति: नैवदृश्यते। शकुन्तलाया:विदायसमये आश्रमस्य परिवेश: करुणमय: आसीत्। आश्रमवासिन: सर्वे दु:खेन आकुला: भवन्ति।

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठ: स्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।

वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकस:
पीड्यन्ते गृहिण: कथं नु तनयाविश्लेषदु:खैर्नवै: । ५

सप्तमाङ्केऽपि स्वर्गादवतरणसमये मातलि: दुष्यन्तं ऋषिणाम् तपोवनं दर्शयति ।आश्रमं पुरत: मुनय: उपविष्टवन्त:, येषां अवयवार्धनिमग्नवल्मीकै:आसीत्। अहि चर्मणा निर्मितं तेषां परिधेयवस्रम्। अस्य आश्रमस्य वृक्षलतासु विविधशाखासु च पक्षिण: वसन्ति ।उक्तं यथा-

वल्मीकार्धनिमग्नमूर्तिरुरसा संदष्टसर्पत्वचा
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपोडित:।
अंसव्यापि शकुन्तनीडनिचितं विभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कविम्वं स्थित:।।६

वृक्षपरिपूर्णं मारीचस्य आश्रमं आकाशत: तौ दृष्टवन्तौ। आश्रमस्थितबालक: सर्वदमन: सिंहशावकेन सह क्रीडति ।एतद्भवति आश्रमस्य रूपं ,यत्र पशुमानवयो एकात्मता दरीदृश्यते।

आत्मीयभाव:

कालिदासस्य प्राणभूते प्रथमाङ्के चेतनाचेतनयोर्मध्ये आत्मीयभाव: विद्यते। आश्रमस्य वृक्षलतां प्रति स्नेहाधिक्यं अत्र परिवेशित:। कवि: शकुन्तलया: मुखेन उक्तम्, "अस्ति मे सोदरस्नेह: अपि एतेषु।ह्व७

शकुन्तला पतिगृहगमनसमये तस्या निकटात्मीया: विविधद्र्व्याणि स्मारकच्विह्नरुपेण तस्मै प्रदत्तम्। आश्रमवासिन: अरण्ये स्थितोऽपि लौकिकानुशासनं न विस्मरन्ति।

मङ्गलनिमित्तम् शकुन्तलायां वृक्षलता: शुभ्रक्षौमवस्राणि प्रयच्छन्ति। के के पदसौन्दर्यं वर्धनाय लाक्षारसं दत्तम्। वनदेवता नवीनकिसलयानि अंलकाररुपेण व्यावहारं कर्तुमयच्छन्।वृत्तान्तमिदं द्वीतिय ऋषिकुमारस्य मुखात् श्रुयते। तद्यथा—

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपभोगसुलभो लाक्षारस: केनचित्।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितै
र्दत्तान्याभरणानि तत्किसलयोयोद्भेदप्रतिद्वन्दिभि:।८

प्रियजनस्य विच्छेदे तस्य परिवारवर्गा: अतीव शोकं कुर्वन्ति। तथैव आश्रमवासिन: समावस्था दृश्यन्ते।शकुन्तला कथयति,

"तात; इत: एव किं प्रियंवदामिश्रा: सख्य: निवर्तिष्येन्ते।९

मृगस्य मुखात् अर्धचर्वितकुशा: पतन्ति। मयूरा: तस्या: नृत्यं परित्यजन्ति। निर्जीवा: तेषां दुखं अङ्गीभूतमकुर्वन्ति।

लता: अपसृतपाण्डुपत्रा: । शकुन्तला वनज्योत्स्नां सौदार्यस्नेहेन पालयति। मृगा: तस्या: पथावरोधं कुर्वन्ति।

उद्गलितदर्भकवला मृग्य: परित्यक्तनर्तना मयूरा:।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लता:।[१०]

कालिदासस्य लेखन्यां निर्जीवा: अपि सजीवरुपेण प्रतिभान्ति।
तेषां अनुभूति: मन्तष्यस्यानुभूते: उपरि ।

वृक्षलतावर्णनम्:

कालिदासस्य रचनायां वृक्षलता: एव जीवन्तसत्तारुपेण अत्र परिवेशितोऽस्ति। आश्रमस्य लतां प्रति आश्रमवालिकाशकुन्तलाया: हृदये सहोदरस्नेह: अतीव रमणीय: ।सा वदति,"तदा आत्मानामपि विस्मरिष्यामि[११] ।आश्रमस्य वृक्षलता:, आश्रमवासिन: विविधकार्येषु आत्मियतां प्रकटयन्ति। लताया: शीतलच्छाया मनुष्याणां परिश्रमं दूरं करोति। प्रियंवदाया: मुखेन कथ्यते यत्,

"तेन हि अस्यां प्रच्छायशीतलयां सप्तपर्णवेदिकायां मुहूर्तमुपविश्य परिश्रमविनोदं करोतु आर्य:।।[१२]

आश्रमवालिका: वृक्षलतां आश्रित्व तेषां शयनकक्षं रचयन्ति। दिवाभागे सूर्यस्य किरणस्य प्रखरतापे शकुन्तला सखिभि: सह वेतसकुञ्जं याति। पद्मपत्रम् अतीव कोमलं मनोहारी चेति । पद्मपत्रस्य कोमलता कामपीडया दग्धा शकुन्तलाया: तापं नाशयति। सखी मुखात् इदं वृतान्तं श्रूयते।

"हला शकुन्तले, अपि सुखायते ते नलिनीपत्रवात:।।[१३]

कालिदास: स्वीयप्रतिभाद्वरा सामान्यविषये असामान्यरूपं आरोपयति। शकुन्तलापतिगृहागमनसमये समवेदना सहमर्मिता च अतीवमनोहरा एव। शकुन्तलाया: वृक्षलतां प्रति स्नेह: महर्षिकण्व: सून्दररूपेण वर्णयति।वृक्षलताया: उपरि जलसिञ्चनात् पूर्व शकुन्तला जलं न ग्रहणं करोति। वृक्षलतां प्रति स्नेहवशात् तस्य पल्लवं अपि न स्वीकरोति। कुसुमप्रसूतिसमये तस्या: उत्सव: इति मन्यते सा। तद्यथा—

पातुं न प्रथमं व्यवस्यति जलं युस्मास्वपीतेषु या
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आद्ये व: कुसुमप्रसूतिसमये यस्या: भवत्युत्सव:
सेयं याति शकुन्तला पतिगृहं सर्वेरनुज्ञायताम।।[१४]

आश्रमवृक्षं प्रति शकुन्तलाया:स्नेहाधिक्यं पृतिपाद्यते।आश्रमत्यागाद्पूर्वं सा वनजोत्स्नां आमन्त्रणं करोति ।सा कययति,

"वनज्योत्स्ने, चूतसङ्गता अपि मां प्रत्यालिङ्ग इतोगताभि: शाखावाहाभि:। अद्य प्रभृति दूरपरिबर्तिनी भविष्यामि ।१५ लौकिक पिता यथा अलंकारादिभि: विमण्डितां कन्यां पतिगृहं प्रेषयति, एवमेव महर्षिकण्व: शकुन्तलां वनजातै: अलंकारादिभि: मण्डयित्वा पत्यु: दुष्यन्तस्य पार्शे प्रेषतयि। वकुलपुष्पमालया शकुन्तला सुसज्जिता भवति।उक्तं यथा,

"तेन हि एतस्मिन् पूतशाखावलम्विते नालिकेलसमुद्गके एतन्निमित्तम् एव कालान्तरक्षमा निक्षिप्ता मया केसरमालिका।ह्ल १६

पशुप्रेम:

आश्रमे पशव: मुक्तया सानन्देन यत्र तत्र विहरन्ति। तेषां मनसि भय: नास्ति।मनुष्या: पशो: उपरि वाणं न निक्षिपन्ति। वृतान्तमिदं महाकवि: वैखानसस्य मुखात् सूचयति।

"आश्रम मृगोऽयं न हन्तव्यम् न हन्तव्यम्१७

आश्रममृगाणां प्रति आश्रमवासिजनानां प्रेमप्रीति: तथा पुत्रवत् स्नेह: अपि कवि: प्रकटयति। आश्रमे पालिता: मृगा: अतीवशान्त: तथा कोमलशरीरे दुष्मन्तस्य वाण: वज्रसार: इव ।कविकालिदास: वैखानसस्य मुखेन उक्तम्,

न खलु न खलु वाण: सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तुलाराशाविवाग्नि:।
क्व वत हरिणाकानां जीवितं चातिलोलम्
क्व च निशितनिपाता वज्रसारा: शरास्ते।।१८

मृगा:, वराह: शादुर्ल: इत्यादय:पशव: स्वेच्छया स्वकर्म कुर्वन्ति। द्वितीयाङ्केऽपि राजा दुष्यन्त: पश्यति केचन मृगा: कस्यापि वृक्षस्य छायायाम् एकत्रीभूय: इतस्तत: पश्यन्ति स्म। सुन्दरवर्णनमेव कालिदासेन विहितम् ।प्रसङ्गेऽस्मिन् उक्तं यथा—

गहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायावद्धकदम्वकं मृगकुलं रोमन्थमभ्यास्यतु।
विस्रब्धां क्रियतां वराहततिभिर्मुस्ताक्षति: पल्वले
विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनु:।।१९

9अभिज्ञानशकुन्तलम्" नाटके चतुर्थाङ्के यदा शकुन्तला स्वपतिगृहं गच्छति तदानीं तं दृष्ट्वा कापि मृगी दु:खेन स्वमुखात् दर्भान् उद्गीरयति । तद्यथा—

उद्गलितदर्भकवला मृग्य: परित्यक्तनर्तना मयूरा:
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लता:।।२०

पुनरपि चतुर्थाङ्के यदा शकुन्तला दुष्यन्तस्य गृहं गच्छति कण्वेणोक्तम्—

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे।
श्यामाकमुष्टिपरिवर्धितको जहाति
सोऽयं न पुत्रकृतक: पदवीं मृगस्ते।।२१

पञ्चमाङ्के यदा दुष्यन्त: शकुन्तलां न स्मरति तदा शकुन्तला तं स्मरयितुम् पशुप्रेम्ण: वृत्तान्तम् वदति।

ततक्षणे स मे पुत्रकृतकः दीर्घापाङ्गो नाम मृगपोतकः उपस्थितः ।तया अयं तावत् प्रथमं पिवतु इति अनुकम्पिना उपच्छन्दितः उदकेन। न पुनः ते अपरिचयात् हस्ताभ्यासम् उपगतः।[२२]

**वाटिकावर्णनम् :**

दुष्यन्तः सूचयति, महर्षिकण्वस्य आश्रमात् दक्षिणे एका वाटिकास्ति ।तपस्विकन्यकाः वालपादपेभ्यः पयः दातुम् आगच्छन्ति। तत् दृष्ट्वा राजा अतीव गुणमुग्धाः । अनसूया उक्तवती—

"त्वत्तः अपि तातकाशपस्य आश्रमवृक्षकाः प्रियतरेति तर्कयामि येन नवमालिकाकुसुमपेलवा अपि त्वम् एतेषाम् आलवालपूरणे नियुक्ता।[२३]

**उपसंहारः**

प्रकृतिः मानवजीवनेन सह अङ्गाङ्गिरुपेण तिष्टति। काव्यजगतिकविः कालिदासः प्रकृतिकविरुपेण परिचितः। अभिज्ञानशकुन्तलायां प्रकृतिभावना प्रति अङ्केन ओतप्रोतःया विश्वसाहित्ये सुप्रसिद्धा ।नाटके मानवने सह वृक्षलताति यथा अत्मियभावं दर्शयति, तथैव अन्यत्र नैवदृश्यते ।शकुन्तला न केवलं कण्वस्य पालिताकन्या अपितु ततोपरि सा प्रकृतेः कन्यारुपेण विशेषआदृतास्ति।

तत्थसूत्रं :

१. उत्तररामचरितम्, चतुर्थाङ्केः, श्लोक-११
२. एष खलु कण्वस्य कुलपतेः अनुमालिनीतीराश्रमो दृश्यते, अभिज्ञानशकुन्तलम्, प्रथमाङ्के।
३. तत्रैव,१/१४
४. तत्रैव,२/७
५. तत्रैव,४/६
६. तत्रैव,७/११
७. तत्रैव, प्रथमाङ्के
८. तत्रैव,४/५
९. तत्रैव,चतुर्थाङ्के
१०. तत्रैव,४/१२
११. तत्रैव, प्रथमाङ्के
१२. तत्रैव, प्रथमाङ्के
१३. तत्रैव, तृतीयाङ्के
१४. तत्रैव,४/९
१५. तत्रैव, चतुर्थाङ्के
१६. तत्रैव, चतुर्थाङ्के
१७. तत्रैव, प्रथमाङ्के
१८. तत्रैव,१/१०

१९. तत्रैव,२/६
२०. तत्रैव,४/१२
२१. तत्रैव,४/१४
२२. तत्रैव,पञ्चमाङ्के
२३. तत्रैव, प्रथमाङ्के

सहायकग्रन्था:

१.अभिज्ञानशकुन्लम्,अनिलचन्द्र वसु,संस्कृत बुक् डिपो,कोलकाता,१९९९
२. कालिदास प्रतिभा, मोतिलाल वनारसि दास,वाराणासी,२०००
३. संस्कृत साहित्य संभार,गौरीनाथशास्त्रा,नवपत्र प्रकाशनम्,कोलकाता,१९८०

अध्यापिका
संस्कृतविभाग:
वेलदा महाविस्यालय:, पश्चिमवङ्ग:

## विभाषादिक्समासेबहुव्रीहौइति सूत्रस्य प्रख्यापनम्

प्रकाशकुमारत्रिपाठी

उपक्रम : - विभाषादिक्समासेबहुव्रीहौ[१] प्रथमाध्यायप्रथमपादस्यअष्टविंशतितमंसूत्रम्। अस्यफलितार्थः यथा- दिक्समासेबहुव्रीहोसर्वादीनिसर्वनामसंज्ञकानिविभाषाभवन्ति। उदाहरणं यथा —सर्वनामसंज्ञापक्षे— उत्तरपूर्वस्यै, सर्वनामसंज्ञाया अभावपक्षे— उत्तरपूर्वायै।

**शंकापुरस्सरमाक्षेपभाष्यम् : -**

**प्रथमाशंका -** सूत्रेशंकाजागर्त्ति यत् दिक्ग्रहणंकथंकृतमिति ?अत्र प्रदीपकारः[२] कथयतिएकस्मिन्बिषये विकल्पप्रतिषेधयोः असम्भवात् सामर्थ्यात् विषयभेदः आश्रयितव्य इतिप्रश्नः ।नागेशेनउद्योते चर्चितं यत्- सर्वत्र परत्वात्प्रतिषेधे विकल्पवैयर्थ्यम्। सर्वत्र बाविकल्पे भावाभावयोः तेनैवसिद्धत्वात्प्रतिषेध-आनर्थक्यमिति तयोरेकविषयकत्वासंभवात्इतिभावः।

**द्वितीया शङ्का -** समासग्रहणंकिमर्थम् ? अर्थात्'विभाषादिग्समासेवहुव्रीहौ'इतिसूत्रे समासपदस्य ग्रहणंकिमर्थं कृतमिति ?

**तृतीया शंका-** वहुब्रीहिग्रहणंकिमर्थमिति ? सूत्रे वहुब्रीहिपदस्यग्रहणंकिं प्रयोजनम् इति ?

शङ्कासमाधानभाष्यस्यप्रतिपादनम् -

तत्र'विभाषादिक्समासेवहुब्रीहौ'इतिसूत्रेदिक्ग्रहणंकिमर्थमितिप्रथमाशंकाउपस्थिता। तत्रअस्याः शंकायाः समाधानाय भाष्य कारेण उच्यते- 'विभाषादिक्समासेवहुब्रीहौ'इतिसूत्रेण सर्वनामसंज्ञायाः विभाषानामनिषेधात्मकस्तथाविकल्पात्मकआदेशः भवति ।वहुब्रीहिसमासेसर्वनामसंज्ञायाः निषेधः क्रियते। यदिसूत्रेदिक्पदंनदीयते, तर्हि''विभाषासमासेवहुब्रीहौ''इतिसूत्रं स्यात्, एवं च ''नवहुब्रीहौ''[३]इति सूत्रस्य अवतारणाभवति। सूत्रद्वयोर्मध्ये कुत्र सर्वनामसंज्ञायाः विभाषाभवति ? पुनः केनसूत्रेण तस्य प्रतिषेधः भवतिइतिशंकाजायते।तत्र भाष्यपङ्क्तिः यथा- ''नवहुब्राहौ''इतिप्रतिषेधं वक्ष्यति,तत्रन ज्ञायते —क्वविभाषा,क्वप्रतिषेधइति। दिग्गहणेपुनः क्रियमाणे नदोषः भवति- ''दिग्उपदिष्टेविभाषा अन्यत्र प्रतिषेधः''इति भाष्यमतस्य बिरुद्धं भवति।अतः सूत्रेविभाषादिक्समासेवहुब्रीहौदिक्ग्रहणंसार्थकम्। सूत्रेदिक्गृहणस्य फलंभवति यत्-दिक्पूर्वकः वहुव्रीहिसमासः यत्र यत्रभवतितत्रतत्र सर्वनामसंज्ञायाः विभाषा जायते। यत्रकेवलंवहुब्रीहिसमासः भवतितत्र- संर्वनामसंज्ञायाः निषेधः भवति। अत्रउदाहरणं यथा —'त्वत्पितृकः'त्वंपिता यस्य इतिविगृहे- वहुब्रीहिसमासे''नवहुव्रीहौ''इतिसूत्रेणअत्र संवनामसंज्ञायाःनिषेधः भवति।अत्रउदाहरणं यथा त्वत्पितृकः-त्वंपिता यस्य इतिविग्रहेवहुब्रीहिसमासे'नवहुव्रीहौ'इतिसूत्रेणअत्र सर्वनामसंज्ञायाः निषेधः भवति।

द्वितीयाशंका जायते सूत्रेसमासग्रहणंकिमर्थम् ? इत्यत्र समाधानाय भाष्यकारः कथयति- समासेएव यो वहुब्रीहिः तत्र यथा स्यात्। वहुव्रीहिःतद्भावेन यो वहुव्रीहिः तत् माभूत्। दक्षिणदक्षिणसैदेहिइतिअत्र अयमाशयः"यत् बिभाषादिक्समासेवहुव्रीहौ" इत्यनेन वाइष्टसिद्धिः

भवतिइतिन वाच्यम्। समासएव यो वहुव्रीहि: तत्रैव स्यात्, वहुब्रीहि:तद्भावेन यो वहुव्रीहि: तत्रन उच्यते।

उद्योतकारनागेशेन[४]अत्र समासग्रहणस्य यथार्थता प्रतिपादनावसरे कथ्यते यत्— व्याप्य धर्मातिदेशे व्यापकधर्मशब्दस्य अतिदेशात्समासोऽपि अयमतमाह मुख्य इति। भाष्ये— दक्षिणदक्षिणसैइति।

**तृतीयाशंका भवति**—सूत्रेवहुव्रीहिग्रहणंकिमर्थम्? भाष्यकारेण समाधानमूलकं मतं पर्यालोचितं यथा —द्वन्द्वेमाभूत्- यथा —दक्षिणोतरपूर्वाशाम्इति। अत्रप्रदीपकारेणउच्यते- "द्वन्दे च"[५]इतिसुत्रेण सर्वाद्यन्तस्य द्वन्द्वस्य सर्वनामसंज्ञाप्रतिषेधोन अवयवानाम्इति। उद्योतकारेण कथ्यते"नवहुबीहौ"इतिवत्द्वन्द्वेचिकिर्षितेन इत्यर्थ: न। यद्यपि द्वन्द्वेऽपि उद्भूतावयवभेदसमुदायस्य प्राधान्येन तंप्रतिवहुब्रीहिरिवद्वन्द्वस्य गुणत्वेन तदप्राप्तेरयमेव उचित:। तथापि त्यदादीनां-द्वन्द्वाभावेनादन्तेकाकचोरविशेषेण, फलाभावात्अन्य फर्यायत्व शव्दस्य सर्वनामत्वेनमानम्। वहुसमत्वत्वात्गणेतत्पाठस्य। विभाषाजसि इत्यस्य असङ्गतेश्च इति।

पुन: भाष्यकारेण कथ्यते,नैतदस्ति प्रयोजनम्, "द्वन्द्वेच"इतिअनेनप्रतिषेधोभविष्यति। अत्रसमाधानसाधकभाष्यं भाष्यकारेण उपस्थापितं यथा नाप्राप्तेप्रतिषेधे इयं विभाषा आरभ्यते सा यथैव "नवहुब्रीहौ"इतिएतंप्रतिषेधंवाधते। एवंद्वन्द्वे च इत्येतंवाधते।

पुन: समाधान भाष्यं यथा नवाधतेकिंकारणम्?

येन नाप्राप्ते तस्य वाधनंभवतिन चाप्राप्तेनवहुब्रीहौइति। एतस्मिन्प्रतिषेधे इयं विभाषा आरभ्यते। द्वन्द्वे च इतिएतस्मिन्पुन: प्राप्तेनाप्राप्ते च।

**अवशिष्टांश: -**

तत्रमहाभाष्यकारस्य "येननाप्राप्ते..."इतिपदस्य विवरणार्थं प्रदीपकार: कथयति- येन नाप्राप्तेइति। अयमत्रार्थ:- "नवहुब्रीहौ" इत्यतेन सर्व: स्वविषयो व्याप्त:। "द्वन्द्वे च" इत्यनेन तु न व्याप्त:, "विभाषाजसि"[६]इतिजसिविकल्पविधानात्। यदि चानेनद्वन्द्वेविभाषा स्यात् जसिअनुवाद्दोष: प्रसज्येत। वहुव्रीहौतु अनुवाददोषम्अलभमानाकृतार्थासतीपरत्वात्यं विभाषाद्वन्द्व च इतिअनेन वाध्यते।

अत्र अयमाशय: यत: 'नवहुब्रीहौ"इतिसुत्रेण सर्वनामसंज्ञाया: निषेधेजातेविकल्पताएवअत्र काम्या। परन्तुद्वन्द्वसमासस्य सर्वनामसज्ञा निवारणाय वहुब्रीहौ इत्यस्य ग्रहणंन यथार्थम्। यत: "द्वन्द्वेच"इतिसुत्रेणद्वन्द्वसमासेसर्वनाम संज्ञाया: निषेधात्'वर्णाश्रमेतराणाम्'इतिउदाहरणे-सर्वनामसंज्ञाजनितकार्याणाम्अप्रसक्ति:। तथाच'विभाषाजसि'अत्रजसाधारं'सि'भावाख्यं यत्कार्य्यं तत्र कर्तव्ये द्वन्देसर्वनामसंज्ञाविकल्पेभवति। यथा सर्वनामसंज्ञापक्षेवर्णाश्रमेतरे। सर्वनाम संज्ञाया: अभावपक्षेवर्णाश्रमेतरा: इति सिध्यति।

तत्र प्रसङ्गेऽस्मिन् नागेश: उद्योतव्याख्याने प्रकटयति- ननु यथा वहुव्रीहौद्वन्द्वेच इतिअप्राप्तौ अयंप्रवर्तते, तथाद्वन्दे"नवहुव्रीहौ"इतिअप्राप्तेऽपि, इति किमुच्यते न चाप्राप्तेइति अत: आह

अयमत्रार्थइति। एवं च अप्राप्तेइति अस्य भाष्ये बहुब्रीहौ इत्यादि।द्वन्द्वेच एतस्य तु द्वन्द्वे इत्यादि। एवं च वहुब्रीहौसर्वत्र निशेधापत्तिः। द्वन्द्वे तु ''द्वन्द्वे च''इति अस्य नसर्वत्र प्राप्तेः जसिविभाषया बाधात्। अत्र तात्पर्यन्तु एतद् यत् ''द्वन्द्वे च''इतिसूत्रेण सर्वनामसंज्ञायाः निषेधः सर्वत्र न युज्यते।'विभाषाजसि'इतिसूत्रेण विकल्पविधानस्य विद्यामानत्वात्।

तत्रसमाधानभाष्यं पतञ्जलिनाएवंप्रतिपादितं यथा- अथवा- पुरस्ताद्अपवादाअनन्तरान्वितंवाधन्ते, नोतराम्इति एवमियं विभाषानवहुबीहौइतिएतंप्रतिषेधंवाधिष्यते।

**(समाधानवाचकान्तरभाष्यम्)**

अर्थवा-इन्द्रं तावदयं प्रष्टव्यः- इहकस्मान्न भवति-या पूर्वासोत्तरा अस्योन्मुग्धस्य सोऽयं पुर्वोतरःउन्मुग्धः, तस्मै-पूर्वोतराय देहिइति ? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य एवइति।।

अत्र''पुरस्तादपवादा ......''इतिपरिभाषया 'नवहुब्रीहौ''इतिसूत्रेण जायमानं सर्वनामनिषेधंवाधते, परन्तु''द्वन्द्वे च''इतिसूत्रेणकृतंसर्वनामसंज्ञानिषेधः बाधते। अत्रप्रदीपकारेण-उच्यते लक्षणप्रतिपदोक्तयोः इति। दिक्समासइति व्यपदेश 'दिङ्नामानि'इति विहितस्य न्यायः, तत्रहिदिक्शब्दोऽस्ति। अस्मिन प्रसङ्गे उद्योतकारेण कथ्यते- भाष्ये-या पुर्वासाउत्तराइति। यद्यपि वाक्ये यत् शब्दाभ्याम् उद्देश्यविधेयत्वं प्रतियते-या पुर्वात्वप्रकारकशब्दविशेष्या साप्रसिद्धतरा यस्य-इत्यर्थात्। एवं च उतरा शब्दस्य पूर्व-निपातःप्राप्नोति, तथापिसमानेतद् अप्रतीत्या पूर्वपदस्य ज्ञानविशेष्यपर्यन्तलक्षकत्वेन गुणवाचकत्वात्विशेषणत्वेनपुर्वनिपातइति बोध्यम्।

त्रतहिदिक्शब्दोऽस्तीति। न च शेषग्रहणेनअनेकग्रहणेनवासिद्धे उभयपादेन पुनर्विधानद्वारासर्वत्र विशेषविहितत्वात्सोऽपिप्रतिपदोक्तः,स्पष्टं चेदं'आन्महतः समानाधिकरणजातीययोः'[७]इतिसूत्रे।

अत्रइदमेवभाव्यम्। अनेकमन्यपदार्थे इत्यनेन वहुब्रीहिसमासेवहुब्रीहित्वात्अत्रविकल्पेप्राप्तेऽपिलक्षणप्रतिपदोक्तपरिभाषाया नास्य ग्रहणंकिन्तु'दिङ्नामान्यन्तराले'[८] इत्यस्य एव वोध्यते। एवं च तया परिभाषया द्वन्द्वेअपिनप्राप्तिरिति। अत्रउद्योते[९]यत् कथितं तस्य अयमाशयः- विशेषशव्दविशेष्यनिघ्नः विशेषणप्रधानादिशव्दवत् अजहत्लिङ्गः। अतएवराजाविशेषणं, पुरुषः विशेष्यः। विशेष्यं धात्वर्थं इति तु 'शक्यं क्षुत्......'इतिवत्।

उपसंहारे वहुब्रीहिग्रहणस्य यदि प्रयोजनं नास्ति, तर्हिद्वन्द्वे सर्वनामसंज्ञाया कथंप्रतिषेधः नगृह्यते। उतरार्धं तर्हिवहुब्रीहिग्रहणं कर्तव्यम् इति प्रयोजनान्तरं भाष्ये प्रदत्तम्। बाधकभाष्यं कथयते-उतरार्धं वहुबीहौग्रहणंन कर्त्तव्यं'नवहुबीहौ'इतिसूत्रेण सर्वनामसंज्ञाया वाधात्। साधकभाष्यं कथयति-द्वितीयं कर्त्तव्यम्।

वहुब्रीहिरेव यो वहुब्रीहिः तत्र यथास्यात्। वहुब्रीहिवत्भावेन यो वहुबीहिः तत्रमाभूत्। एकैकस्मैदेहि। एनं प्रबोध्य बाधकभाष्यं सूचयति। एतदपिनास्ति प्रयोजनम्। समासेइतिबर्तते,

तेनवहुब्रीहि: विशेषयिष्याम:- समासे यो वहुब्रीहिरिति। समास य इत्यस्य तात्पर्य्यं यथा समासपदेन मुख्यस्य एव औपदेशिकस्य ग्रहणमितिप्रागुक्तम्।अत्रसिद्धान्तेसमासग्रहणं प्रत्याख्यातम् इतिन च आशङ्का न च उत्तरम्। पुन: प्रयोजनान्तरं प्रकटनाय भाष्यंप्रस्तौति- इदं तर्हि प्रयोजनम्- अवयवभूतस्यापि वहुब्रीहे: प्रतिषेध: यथास्यात्। इहमाभूत्वस्त्रमन्तरमेषां- वस्त्रान्तरा:, वसनमन्तरमेषांबसनान्तरा:। अत्र अन्तरशव्दस्य सर्वनामत्वेऽपिपरनिपात: राजदन्तादिवत् वोध्य:।

**पादटीका:**

(१) पा.सू. १-१-२८

(२) म.भा. पस्पशा.

(३) पा.सू. १-१-२९

(४) म. भा. पस्पशा.

(५) पा.सू. १-१-३१

(६) पा.सू. १-१-३२

(७) पा.सू. ६-३-४६

(८) पा.सू. २-२-३६

(९) म.भ. पस्पशा.

**Ph.DScholar(Sanskrit)**

**Maharaja Sriram Chandra**

**Bhanja Deo University**

**Takatpur, Baripada, Mayurbhanj**

## स्मार्त्तधर्मेषु गुणधर्मस्य महत्वम्

***Madhusudan Sahoo***

अहोऽनिर्वचनीयाऽनादौऽस्मिन् दु:खप्राये संसारे धर्मार्थकाममोक्षाख्यचतुर्विधेषु पुरुषार्थेषु धर्म: एव परमपुरुषार्थ इति। साधारणत: धर्मविषयकमनुशासनं यस्मिन् शास्त्रे विहितं वर्त्तते तदेव शास्त्रं धर्मशास्त्रमिति विद्वद्भि: स्विक्रियते ।

धृङ् धारणपोषणयोरित्यस्माद्धातोरौणादिके मन् प्रत्यये कृते धर्मशब्दो निष्पद्यते। ध्रियते लोकयात्रानिर्वहणार्थं य: स धर्म इति। धारणाद्धर्म इति धर्मस्य निष्पत्ति:। धारणार्तकधृङ्धातोर्भवति। श्रुतिस्मृतिप्रतिपादित धर्माणामाचरणं कृत्वामानव: परत्रेह च सुखफलं प्राप्तुमर्हति। अत: सदा धर्मयुक्तकर्मणि विद्वानाचरतीति शास्त्रकाराणामाशय:।

देशकालानुसारेण धर्मस्यानेके भेदा: परिकल्पिता: । तत्र स्मार्त्तधर्म: षड्विध: प्रतिपादित:। ते यथा वर्णधर्म:, आश्रमधर्म:, वर्णाश्रमधर्म:, गुणधर्म:, निमित्तधर्म:, साधारणधर्मश्चेति । षड्सु स्मार्त्तधर्मेषु गुणधर्म: मूर्धन्यस्थानमलङ्करोति। गुणधर्ममध्ये अभिषेकादिगुणयुक्तस्य राज्ञो धर्मोऽन्तर्भवति । अतो गुणधर्मो राजधर्म एव। राज्ञ: प्रजापालनं परमो धर्म:। दुष्टानां निग्रहं विना प्रजापालनं सम्यक् कर्तुं न शक्यते। दुष्टपरिज्ञानं विना च तेषां निग्रहो न सम्भवति। तत् परिज्ञानञ्च व्यवहारं विना न भवति। अतो राज्ञो धर्मेषु व्यवहारदर्शनं मुख्यम्।

राजधर्मे सन्धिविग्रहगुणद्वयं मुख्यरुपेण दरीदृश्यते। तेषां विषये महर्षिमनुना उक्तं यत् -

सन्धिश्च विग्रहं चैव यानमासनमेव च।
द्वेधीभावं संवयञ्च षड्गुणांश्चिन्तयेत्सदा।। (मनुस्मृति:- ७/१६०)

एते सन्धिविग्रहादिभि: गुणैरभिषिक्त: क्षत्रियविशेष: एव राज्ञपदेनाधिष्ठितो भवति। अतो गुणधर्मो राजधर्म एव इत्यत्र नास्तिकाऽपि विचिकित्सा। एतेन प्रजारक्षणार्थं प्रातकालादारभ्य शयनं यावत् राज्ञा क्रियमाण: कर्मविशेष: राजधर्मापरपर्य्यायो गुणधर्म इत्युच्यते।

व्यवहारस्यान्तर्गत राजधर्म एव। अयञ्च व्यवहारस्य लोकप्रयोजनीयता सामाजिकता च अधिकाधिकतया विद्यते। यतो हि केनचित् पण्डित: न्यायप्राप्तये न्यायालयं गत्वा व्यवहारं करोति। तत्रादौ व्यवहारस्य निरुक्तिविषये कात्यायनेन उक्तं यत् -

विनानार्थेऽवसन्देहे हरणं हार उच्यते।
नानासन्देहेहरणात् व्यवहार स उच्यते।। (मनुस्मृति: पृ. ३५८)

राजधर्म मुख्यरुपेण राज्ञ: कर्त्तव्यानि, राज्ञ: दैनन्दिनकृत्यम्, राज्ञ: आत्मरक्षणोपाया:, राज्यस्याङ्गानि, एतेषां राजधर्मे महद्योगदानं वर्तते । क्षत्रियधर्ममनुसरतां राज्ञा प्रजापालनमवश्यं कर्त्तव्यम्। प्रजापालनेन एव दुष्टदमनं सम्भवति। दुष्टदमनेन च प्रजा: सम्यक् परिपालिता: भवन्ति।

प्रजापालनातिरिक्तं देशरक्षणं, राज्यजयं च राजा कुर्यात्। शास्त्रग्रहणमपि राजा कुर्यात्। प्रजारक्षणसमये युद्धक्षेत्रात् पलायनं राजा न कुर्यात् । वरं तत्रैव प्राणत्याग करणीयम्। धर्मार्जनार्थं विशिष्टेषु अवसरेषु विप्रेभ्यो बहुधा धनं प्रतिपादयेत्। राजा सर्वेषु कार्येषु सांवत्सराधीनः स्यात्। शान्तिस्वस्त्यमनैर्दैवोपघतात् प्रशमयेत्। आत्मनः हितार्थं राजा सदा ब्राह्मणान् रक्षेत्। एतानि कर्माणि राजा सर्वदा कुर्यात्।

राज्ञः दैनन्दिन कर्मम् अपि सम्यग्रुपेण प्रतिपादयेत्। तूर्यघोषेण वेणुविणामृदङ्गादिशब्देन स्वापार्थं राजा गृहे प्रविशेत्। तथैव ब्रह्ममुहूर्ते उत्थाय श्रुतिस्मृतिवचांसि तदर्थावगमोपायोश्च सर्वकार्याणि चिन्तयेत्। तदनु स्नानशालां समागत्य पूतेन वारिणा स्नात्वा भस्कराय देवाय समहितोऽर्ध्यं दत्त्वा अलंकृतगात्रः सन् मन्त्रवत् वक्त्रमालोक्य विप्राय घृतपात्रं सकनकं नृपः दद्यात्। ततः सभां प्रविशेत्, तत्रस्थान् ब्राह्मणान् अमात्यान् मन्त्रिणश्च पश्येत्। तत्र स्थिताः प्रजाः प्रतिनन्द्य विसर्जयेत्। प्रतीहारनिबोधितः प्रकृतीश्च पश्येत्। अतन्द्रितः सन् इतिहासश्रवणं च कुर्यात्। एतानि कर्माणि कृत्वा राजामन्त्रिभिः सह मन्त्रयित्वा रथ-नाग-अश्व-खड्ग-धनुः-शस्त्रेषु च पृथिवीयतिः व्यायामं च समाचरेत्। व्यायामानन्तरं स्नानं कृत्वा सुपूजितं विष्णुं पश्येत्। ततः अनुलिप्तः सुरभिःस्रग्वी रुचिरभूषणः सुवासा भोजनार्थमन्नः पुरं व्रजेत्। सर्वदा प्रजानां सुखे एव राज्ञः सुखं आत्मप्रियं न कश्चित् पृथक् रुपेण वर्तते। प्रजानां सुखं हितं च राज्ञे कल्प्यते। तस्मात् कारणात् राजा सततमुद्योगशीलः अर्थानुशासनरतश्च स्यात्। उद्यम एव सिद्ध्युपायः। राजा यदि आलस्यादुद्योगं न कुर्यात् तर्हि तस्य प्राप्तस्यार्थस्य रक्षणाभावात् नाशः निश्चितः। उत्थानेन च समृद्धिं प्राप्नोति ।

राज्ञः आत्मरक्षणोपायाः स्वयं एव कुर्युः। आत्मरक्षणप्रसङ्गे निशान्तप्रणिधो दाराभ्यः रक्षणम्, आत्मनः सर्वेभ्यः रक्षणं च कुर्यात्। तत्रादौ वास्तुविद्याप्रशस्ते देशे स प्रकारपाक्षाद्वारदूर्गवेष्टनखतिकाद्वारायुक्तमनेक प्रकोष्ठपरिगतमन्तः पुरं च कारयेत्। मोहनगृहं निर्माय तदभ्यन्तरे निवसेत्। अथवा भूम्यन्तः गृहं निर्माय द्वारदिषु देवताविग्रहादिकं स्थापयेत्। अथवा स्तम्भमार्गेण आगमनिर्गमादिकं कारयेत्।

राजा क्षत्रियोचितगुणोपेतः अभिषिक्तश्च स्यात्। तस्यैवाभिषिक्तस्य राज्ञो गुणवतो जनपदप्रजापरिपालनादयः स्वधर्मपदेन उच्यन्ते। स्वधर्मपरिपालनार्थं ये गुणाः आवश्यकाः भवन्ति तेषां प्रतिपादनमिदानीं स्मृतिवचनद्वारेण क्रियते। यथोक्तं महर्षियाज्ञवल्क्येन -

**महोत्साहः स्थूललक्ष्यः कृतज्ञो वृद्धसेवकः।**
**विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक् शुचिः।।**
**अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपुरुषस्तथा।**
**धार्मिकोऽन्यसनश्चैव प्राज्ञः शूरो रहस्यवित्।।**
**स्वरन्ध्रगोप्ताऽऽन्वक्षिक्यां दण्डनीत्यां तथैव च।**
**विनीतस्त्वथ वार्त्तायां त्रय्यां चैव नराधिपः।।**

**ब्रह्मणेषु क्षम स्निग्धेष्वजिह्मो क्रोधनोऽरिषु।**
**स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता।।**

(याज्ञवल्क्यस्मृतिः-१/३०९-११,३४)

समाजस्य परिचालनाय एव प्राचीनैः शास्त्रकारैः राजा परिकल्पिताः। समाजस्य अभ्युदयेनैव व्यक्तेरभ्युदयः सम्भवति। राजशास्त्रं नाम राज्ञो राज्यस्य च प्रतिपादकं शास्त्रम्। राजशास्त्रस्य आचारशास्त्रेण सह घनिष्ठः सम्बन्धोऽस्ति। धर्मशास्त्रं मानवजीवनस्य कृते नियमान् व्यवस्थापयति। राजशास्त्रे आचारशास्त्रानुगतनियमानुसारेण न्यायव्यवस्थासञ्चलनार्थं राज्यस्य तन्मूलत्वाद्दण्डनीतेरशास्त्रस्य च समावेशोऽस्ति।

वैदिककालेऽपि राष्टाभिवृद्धये अश्वमेधयागस्यानुष्ठानमभवत्। तादृशी सूचना शतपथब्राह्मण-अथर्ववेदादिष्वपि प्राप्यते। यथा **वैरिमरणकामः श्येनेनाभिचरन् यजेत् इति** भारतीयानामाचार-व्यवहार-समाजराज्याव्यवस्था च श्रुतिप्रामाण्यमूलाऽस्ति। राष्ट्रे निवसतां जनानां परस्पराविरोधेन पुरुषार्धचतुष्टयसिद्धिर्यथा स्यात्। अराजकं तन्त्रं प्रजाः नियन्तुं न समर्थः। अतः शासनार्थं राजतन्त्रस्य, तदध्ययनस्य नृपस्य च सर्वदमनस्यावश्यकताऽभवत्। राज्यं च विना स्वाम्यादिभिनौपपद्यते न वोत्पद्यते। उत्पन्नमप्युपन्नमपि तैर्विना चिरकालं नातुवर्त्तते। ततो भवन्ति साम्यादयो राज्याङ्गनि। राजनीतै प्रकृतिशब्दोराजाङ्गपरः। प्रजापालनं, दुष्टनिग्रहश्चेति द्वयमेव नृप कर्त्तव्यम् वर्त्तते।

*सहायकग्रन्थसूची:*


१. कात्यायनस्मृतिः - गायकवाड ओरियण्टाल सिरिज्, वडोदरा, गुजराट।

२. दक्षस्मृतिः - नवरङ्गप्रकाशन, दिल्ली।

३. धर्मशास्त्रस्योतिहासः - उत्तरप्रदेश-लखनउ, १९८०

४. नारदस्मृतिः - डॉ. व्रजकिशोरस्वाईसम्पादिता, चौखम्बा संस्कृत प्रतिष्ठान, बारणासी, चतुर्थसंस्कारणम्।

५. पराशरस्मृति - श्रीगुरुप्रसादशर्मा, चौखम्बाविद्याभवनम्, वाराणसी

६. व्यासस्मृतिः - नवरङ्गप्रकाशन, दिल्ली।

७. मनुस्मृतिः - चौखम्बा-संस्कृत-सीरीज्-ऑफिस्।

८. याज्ञवल्क्यस्मृतिः - निर्णयसागरमुद्रणालयः, मुम्बई, १९४९।



***Department of Sanskrit***
***Pondychery Universit***

## विष्णुसहस्रनामोस्तोत्रस्य टीकासाहित्यम्

**Dr. Nabin Kumar Pradhan**

विष्णुसहस्र नाम स्तोत्रस्योपरि अनेका: टीका: बहूनि भाष्याणि च विद्वद्भि: रचितानि। तेषु शंकराचार्यकृतभाष्याम्, सत्यदेव वसिष्ठकृताटीका, पण्डित कुलमणिमिश्रकृता टीका, कृष्णानन्द स्वामी टीका राघवेन्द्रभाष्यम्, आद्याप्रसादभाष्यम्, च प्रमुखा: विद्यन्ते।

**शङ्कर भाष्यम् -**

भगवता आदि गुरु शङ्कराचार्येण विष्णुसहस्रनामोस्तोत्रस्योपरि भाष्यं प्रस्तुतम्। अनेनापि मूल ग्रन्थानुक्रमेण व्याखानं कृतम्। वैदिक दृष्ट्या पौराणिक दृष्टया च अनेनभाष्यं प्रस्तुतम्। नाम्नां व्याख्यान-समये वेदमन्त्राणां, उपनिषदां पाणिनि व्याकरणस्य पादटीका: प्रदत्ता:। संगृहिता:पादटीका: विष्णो: सर्वेषां नाम्नां यथार्थतां प्रतिपादयन्ति। भाष्यं व्याकरणदृष्ट्या परिष्कृतं शुद्धं चास्ति। आचार्यशङ्करस्य भाष्ये प्रस्तुतानां व्युत्पत्यादिकं किंभूतं स्पष्ट मालोचितं उदाहरण रूपेण कतिपयानामुपस्थापनमत्र विधीयते।

**विश्वम् –**

विश्वस्य जगत: कारणत्वेन विश्वम् इत्युच्यते ब्रह्म। आदौ तु विश्वमिति कार्यशब्देन कारणग्रहणम्, कार्यभूतविरिञ्चयादि नामभिरपि उत्पन्नम्। स्तुतिर्विष्णोरिति दर्शयितुम्।

यद्वा परस्मात् पुरूषान्ना भिन्न मिदं विश्वं परमार्थतत्वेन विश्वमित्यभिधीयते ब्रह्म ब्रह्मवेदं विश्वंवरिष्ठम्।[१] पुरूष एवेदं विश्वम्[२] इत्यदि श्रुतिभ्य स्तद्भिन्नं न किञ्चित् परमार्थ: सदस्ति। अथवा विशतीति विश्वं ब्रह्म तत् सृष्ट्वा तदेवानु प्राविशत् (तै ३.२.६) विशन्ति सर्वाणि भूतान्यस्मिन्निति विश्वं। ब्रह्म यत् प्रयन्त्यभिसंविशन्ति (तै उ. ३.१.)[३] इति श्रुते: तथाहि सकलजगत् कार्यभूतमेव विशत्यत्र चाखिलं विशती त्युभयथापि विश्वं ब्रह्म इति।

**विष्णु:-**

वेवेष्टि व्याप्नोतीति विष्णु: विषव्याप्त्यभिधायिनो नुक्प्रत्ययान्तस्य स्वरूपं बिष्णुरिति। देशकालवस्तु परिच्छेद शून्यं इत्यर्थ:। विष्लृ व्याप्तौ जुहोत्यादि: तस्मात् विषे: किच्च (३.३६) इत्यनेनौणादिकेन णु प्रत्यय: किच्च स भवति तेन गुणाभावात् विष्णु इति। वेवेष्टि व्याप्नोति कृत्स्नं चराचरं जगदिति विष्णु: स्वयम्भूरिति।

तमु स्तोतार: पूर्यं यथा विद ऋतस्य गर्भजनुषा पिपर्तन।
आस्य जानन्तो नाम चिद् विवक्तन महस्ते विष्णो सुमति भजामहे ।।

**क्षेत्रज्ञ: -**

क्षेत्रं शरीरं जानातीति क्षेत्रज्ञ: आतो ऽनुपसर्गे क: (पा.सू ३.२.३) इति क प्रत्यय: क्षेत्रज्ञ चापि मां विद्धि गीता १३.२. इति भगवत् वचनात् क्षेत्राणि हि शरीराणि।

**सत्यदेव भाष्यं :**

विष्णुसहस्रनाम स्तोत्रस्य पण्डित सत्यदेव वसिष्ठ विरचितं वेद प्रमाणोपबृहितं सत्यभाष्यम् इदानीन्तन काले प्रमुख भाष्यं गन्यते। अनेन महोदयेन भाष्यमिदं भागद्वयेन प्रकाशितम्। पूर्वार्द्धम, उत्तरार्द्धम् च। पूर्वार्द्धे भगवतो विष्णोः प्रथम पञ्चशत नामानि, उत्तरार्द्धे पर पञ्चशतनामानि आहत्य सहस्रनामानी आलोचितानि। अत्र सहस्रनाम्नां संग्रहे सूर्य - आदित्यादि शब्दानामर्थान्तरे प्रसिद्धनामपि नाम्नां सूर्य-रवि-आदित्यादयः शब्दाः सवितुः सनातनस्य देवस्य विभूतित्वेन सन्तस्तद् भेदत्वातस्यैव भगवतः स्तुतिरिति सूचितम् प्रसिद्धग्रहणेऽपि तत्स्तुतित्वं न विघ्नन्ति सर्वमेतज्जगतः तेजसा तेजोमत् सत् स्वरूपं विभार्त्ति। तथा चोक्तं सत्यभाष्ये ज्योतीषि लोकाश्च वनानि नद्यो दिश:समुद्रा गिरय:प्रजाश्च।

यद् भासया भान्ति निजं स्वरूपं
गृणान्ति चैते भुवनेश्मेकम् ।।

अत्र संग्रहे पुंस्त्रीनंपुसकलिङ्गवन्ति नामानि संगृहितानि तानि यथा लिङ्गेन विशेष्येण योजनीयानि। तद्यथा-भूतभव्यभवत्प्रभुः। शिवो देवो विष्णुर्वेति। शरणं ब्रह्म दैवतं वा। सिद्धः ऋद्धिर्देवता वेति।

अनेन महोदयेन सत्यदेवेन व्याकरणदृष्ट्या नाम्नां समीक्षणं कृतम्। प्रथमं तावत् धातु प्रत्ययदृष्ट्या व्युत्पत्तिः प्रदर्शिता। अनन्तरं वैदिकदृष्ट्या व्याख्यानं कृतम्। व्याख्यान समये वेदपोनिषद वाक्यानि संगृहितानि। अनन्तरं मन्त्र लिङ्गञ्च वेदादिभ्यः संगृह्य उपस्थापितः। अनेन प्रकारेण भगवतो विष्णोः नाम्नां प्रमाणिकतां दृढ़प्रतिपादने सफलो भवत्ययं भाष्यकारः।

**अत्र सत्यभाष्यात् कतिपयानि नामानि मया उपस्थाप्यन्ते**

१. श्री जगन्नाथः - विष्णुसहस्र नामस्तोत्रे वर्णितो अस्ति यत् -

तस्य लोक प्रधानस्य जगन्नाथस्य भूपते।
विष्णोर्नाम सहस्र में श्रुणु पाप भयापहम् ।।

अर्थात् भगवान् विष्णुरेव जगन्नाथः यस्य स्मरणमात्रेण पापभयं च दूरीभवति। पुन:महाभारते भीष्मपर्वणि उच्यते-

देवं देवं जगन्नाथं अनन्तं पुरूषोत्तमम्।
स्तुवन्नाम सहस्रेण पुरुषः सततोत्थितः ।।

प्रथमेव जगन्नाथः इति शब्दस्य व्युत्पतिर्भवति जगतः नाथो इत्यादिः। जगत् नाम गमनशील नाम गमनशीलस्य संसारस्य विश्वस्य वा अयं देवो नाथ : नाम प्रभुः। नाथ्यते प्रार्थ्यते अस्मै इति अयं नाथः।

यतोहि अयं देवः सर्वशक्तिमान् सर्वक्षमता सम्पन्नश्च। अतएव स जगन्नाथः एव विष्णुः।

२. पुरुषोत्तम:-पुरुषेषु उत्तम: पुरुषोत्तम:, पुरुषाणाम् उत्तमो वा, विष्णुसहस्रनामस्तोत्रे उल्लेखोऽस्ति यत्—

योग योगविदां नेता प्रधानपुरुषेश्वर:।
नारसिंहवपु श्रीमान् केशव पुरुषोत्तोम: ।।

अर्थात् भगवान् जगन्नाथ: पुरुषोत्तम: अत्र नास्ति कश्चित् सन्देह:। यतोहि उच्यते

सर्वेषामपि क्षेत्राणां राजा श्रीपुरुषोत्तम: ।
सर्वेषामपि देवानां राजा श्रीपुरुषोत्तम: ।।

अर्थात् क्षेत्रेषु श्रेष्ठतमं क्षेत्रं श्री पुरुषोत्तमक्षेत्रम्, तस्य क्षेत्रस्य अधिपति: श्री पुरुषोत्तम: जगन्नाथ: नामदेवता। नरसिंह पुराणेपुनरुच्यते-

पुरुषोतमम् परक्षेत्रं नास्त्यत्र पृथिवी तले।
भूस्वर्गमिति विख्याते देवानामपि दुर्लभ: ।।

श्रीमद्भागवतगीतायामुच्यते उत्तमपुरुषस्त्वन्य: परमात्मेत्युदाहृत:।

३. कृष्ण:–कर्षतीति कृष्ण: व्यासवचनेन सच्चिदानन्दात्मक: शास्वतो विष्णु: कृष्णनाम। कृष्णवर्णात्मकत्वात् वा कृष्ण: निरूक्ति:, यथामहाभारते—

कृष्णामि पृथिवीं पार्थ भूत्वा कार्ष्णाय सोहृत:।
कृष्णवर्णश्च में यस्मात् तस्मात् कृष्णोऽहमर्जुन ।।

विष्णुसहस्रनामस्तोत्रे कृष्णस्य नाम विशंतितमे श्लोके आयाति उच्यते...

अग्राह्य: शास्वत: कृष्णो लोहिताक्ष: प्रतर्दन: ।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्लपरम् ।।

अर्तात् भगवान् विष्णुरेव कृष्ण पुन: कृष्णरेव जगन्नाथ:। यतोहि श्रीमन्दिरे प्रतिदिनं कृष्णाय गोविन्दाय गोपीजनवल्लवाय नम: स्वाहा इत्यनेन श्रीजगन्नाथस्य कृते पूजाविधानं मन्त्ररुपेण उच्चार्यते। अतएव कृष्णरेव भगवान् विष्णु: स एव जगन्नाथ:।

४. लक्ष्मीवान् - लक्ष्मी: अस्य अस्तीति अयं लक्ष्मीवान्। लक्ष्मी विषये अमरकोषे वर्णितोऽस्ति यत्–

लक्ष्मी: पद्मालया पद्मा कमला श्रीहरि प्रिया।
इन्दिरा लोकमाता मा क्षीरव्दि तनया रमा ।।
(भार्गवी लोकजननी क्षीरसागरकन्यका, अमरकोष: स्वर्गवर्ग: २९-३०)

पुन: श्लोक: वर्तते यत् -

शान्ताकारं भुजगशयनम् पद्मनाभं सुरेशं
विश्वाधारं गगनसदृशं मेधवर्णं शुभाङ्गम्
लक्ष्मीकान्तं कमलनयनम् योगिर्भिध्यानगम्यं

वन्दे विष्णुं भवभयहरंसर्वलोकैकनाथम् ।।

एतस्मात् श्लोकात् ज्ञायते यत् लक्ष्म्या: कान्त: श्रीविष्णु: । भगवान् विष्णु: लक्ष्मीवान् सएव जगन्नाथ: अत: श्रीमन्दिरे श्रीजगन्नाथस्य पत्नी रूपेण लक्ष्मीपूजनं क्रियते। विष्णुसहस्र नामस्तोत्रे विद्यते यत् ....

अतुल: शरभो भीम: समयज्ञो हविर्हरि: ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जय: ।।

५. सुदर्शन: - चतुर्धामूर्तिषु अन्यतम: सुदर्शन: वस्तुत: सुदर्शन: नाम शोभनं दर्शनं अस्यास्तीति। अत: भगवान् विष्णु: शोभनदर्शनत्वात् सुदर्शन:नाम शोभनं दर्शनं अस्यास्तीति। अत: भगवान् विष्णु: शोभनदर्शनत्वात् सुदर्शन: अपि च सुदर्शननाम चक्रस्य अधिकारी रुपेणापि सुदर्शनेश्रर: इत्युच्यते।

संक्षिप्य सुदर्शन इत्यपि कथयितुम् युज्यते। श्रीजगन्नाथस्य सुदर्शनेन सह प्रत्यक्ष सम्बन्ध: विद्यते। सुदर्शन एव जगन्नाथ: । विष्णुसहस्रनसमस्तोत्रे उक्तमस्ति-

ऋतु: सुदर्शन: काल: परमेष्ठी परिग्रह: ।

६. दामोदर: दाम रज्जु वन्धनं वा तदुदरे यस्य दामोदर जगत् तदस्मिन्निति वा दामोदर वगवान् विष्णु: । भगवतो विष्णो: अन्यनाम भवति दामोदर: । अयं दामोदारनाम श्रीकृष्णावतारे यशोदया रज्जुद्वारा तस्य उदरदेशे वन्धनकारणात् स भवति दामोदर: । श्रीमन्दिरे पर्वानुसारं जगन्नाथस्य वेशरचना भवति। तेषु वेशेषु राधादामोदर वेश: अन्यतम: । अस्मात् कारणात् निसन्देहेन वक्तुं शक्यते यत् दामोदर हि श्री जगन्नाथ: । विष्णुसहस्रनामस्तोत्रे वर्नितोऽस्ति यत् —

विक्षरो रोहितो मार्गो हेतु दामोदर सह: ।।

७. वामन:- वम्यतेऽनेनेति वमनम्, वमन्त्यस्मिन्निति वा वमनम्। करणेऽधिकरणे वा ल्युट् प्रत्यय: । वमन एव वामन: स्वार्थेऽण् प्रत्यय: । भगवतो दशावतारेषु अन्यतमोऽवतार: वामन: । जगन्नाथ: यदा रथारुढ़ भवति स वामन इति कथ्यते यतोहि उक्तम् रथे तु वामनं दृष्ट्वा पुनर्जन्म न विद्यते। अर्थात् श्रीगुण्डिचा यात्रा समये भगवतो वामनरुपस्य दर्शनमात्रेण पुनर्जन्म न विद्यते इति विश्वास: भगवतो जगन्नाथस्य वहुषु पर्वदिवसेषु नानाविधवेशरचनाया: व्यवस्था वर्तते। तत्र वलि-वामन वेशस्य प्रवन्धोऽस्ति। अनेन वेशद्वारेण श्रीजगन्नाथस्यापि वामनत्वं प्रतिपाद्यते यतोहि विष्णुसहस्र नामस्तोत्रे वर्णितमस्ति यत् -

उपेन्द्रो वामन: प्रांशुरमोघ: शुचिरुर्जित: ।
अतीन्द्र: संग्रह: सर्गो धृतात्मा नियमो यम: ।।

अतएव भगवान् विष्णु: वामन: स एव जगन्नाथ:

**कुलमणिमिश्रश्रद्धा व्याख्या:**

विष्णुसहस्रनाम स्तोत्रस्योपरि पुरीवास्तव्येन पण्डितकुलमणिमिश्र महोदयेन श्रद्धां व्याख्या

विहिता। अनेन सहस्रनाम्नां समीक्षणं स्तोत्रस्यक्रमानुसारेण कृतम्। नाममालामध्ये भूयो भूयः आगतानां शब्दानां अर्थ भेदं स्पष्ट रूपेण ज्ञातुं अनेन महोदयेन देवनागरी अक्षरक्रमेण सज्जीकृतम् अथर्निर्देशानुसारेण शङ्कराचार्यस्य पदाङ्कमनुसरणं कृत्यापि अनेन किञ्चित् परिवर्त्तनं कृतम्।

यानि नामानि पुनः पुनः आगतानि, तेषां नाम्नां अर्थभिन्नं इति हेतुना तानि नामानि पृथक् पृथक् रूपेण गृहितानि। परन्तु एतैः महोदयैः उत्कलभाषया व्याख्यानं कृतम्। व्याख्यानं अतीव संक्षिप्तमासीत्। परन्तु सारगर्भकमस्ति। कुलमणि मिश्र महोदयानां टीका संक्षिप्तापि परमोपादेया भवति। यतो हि साहित्य सागरमुन्मथ्य एभिर्महोदयैः वेदोपनिषद्पुराण लोकिक संस्कृत साहित्यभाण्डगारात् बहु विधानांमतत्वानाम् समावेशोऽत्र विहितो नानाविधानां शब्दानां व्युत्पत्तिप्रकरणं मकरोत्।

**कृष्णानन्द व्याख्या** – स्वामी कृष्णानन्द महोदयेनपि विष्णु सहस्रनामस्तोत्रस्योपरि वाख्यानं कृतम्। अनेन महोदयेन साधारण दृष्टया व्याख्यानं कृतम्। व्याख्यान समये भारतवर्षे विविधेषु स्थानेषु पूज्यमानानाम् भगवतो विष्णोः रूपाणां चित्राणि पुस्तके संस्थापितानि। येन हेतुना शोधकार्यार्थिं नूतनतथ्यानां अनुसंग्रहं लभ्यते।

**किरिट भाष्यम् –**

ड़ा कृष्णानन्द दत्त महोदयेन विष्णुसहस्रनामस्तोत्रस्योपरि किरिटभाष्यम् कृतम्। अनेन महोदयेन नाम्नां क्रमानुसारं भाष्यं प्रदत्तम्। यद्यपि भाष्यं सक्षिप्त रूपेण कृतम् तथापि अत्र वर्णिताः नाम्नां व्युत्पात्यादयः अतीव सरलं शावलीलं चास्ति अत्र मया कानिचन नामानि उदाहृयन्ते।

१. **विष्णुः -**

वेविष्टि व्याप्नाति प्रपञ्चं न केवलं सर्गारम्भ एवापितु तान्पालयतिति विष्णुः।

विष्लृ व्याप्तौ जुहोत्यादिः विषेः किच्च ३/३९ इति णुः। विशेषेण स्नावयति प्रस्नावयति स्व जनानामभिलाषानिति विष्णुः। वेषति सिञ्चति भक्ततरून् आशीर्वारिभिरिति विष्णुः।

२. **वषट्कारः**- उह्यते प्राप्यते इति वषट् नैवेद्यम् विविधं भक्ष्य – भोज्य चोष्य-लेह्य पेयजातम् तद् दयालुतमः प्रभुः स्वयमेव कृपया भक्तानां निकतनेषु करोति कारयति चेति वषट्कारः भक्ताश्च तदेव तदीयं वषट् तस्मै श्रीमते विष्णवे निवेदयन्ति प्रसादरूपेण च स्वीकुर्वन्ति।

**आद्याप्रसादभाष्यम् –**

विष्णु सहस्र नाम स्तोत्रस्योपरि अरप्रसाद महोदयेन भाष्यम् कृतम्। अनेन महोदयेन विष्णु सहस्रनामस्तोत्रस्य नाम पर्यालोचनं कृतम्। संस्कृतेन भाष्यं प्रस्तुतम्। अतएव पाठकेषु विशेषतया आदृत भवति।

**राघवेन्द्रभाष्यम्-**

टि. एन्. राघवेन्द्र महोदयेन विष्णुसहस्रनामस्तोत्रस्योपरि भाष्यं कृतम्। अनेन महोदयेन आङ्गलो भाषया भाष्यम् कृतम् इति हेतुना न केवलं भारते अपितु समग्रे विश्वे जनादृतम् भवति।

अनेन महोदयेन भाष्यं विस्तृत्वरूपेण प्रदत्तम्। अस्मात् भाष्यात् नाम्नां समीक्षणं विस्तृत रूपेण प्राप्यते। शोध छात्राणां कृते तु इदं भाष्यम् अतीव प्रेरणाप्रदायकं वर्त्तते।

**सहायकग्रन्थसूची**


**क-विभागः**

**मूलग्रन्थाः**

ऋग्वेदसंहिता श्रीपाददामोदरसातवलेकरः। भारतमुद्रणालयः, स्वाध्यायमण्डलः, औदः। विक्रमीयसंवत् २००३

काशिका (पाणिनीयव्याकरणसूत्रवृत्तिः) - वामनजयादित्यविरचिता। सम्पादकः पण्डितश्रीशोभितमिश्रः। चौखम्वा संस्कृत पुस्तकालय, वनारस। तृतीय संस्करणम् १९५२।

गीता परिचयः, स्वामी रामसुखदासः, गीता प्रेस, गोरखपुरम्, संवत् २०३८

चरक संहिता - चौखम्वा संस्कृत संस्थान काशीसंस्कृतमाला २२८ वाराणासी

नामलिङ्गानुशासनं नाम अमरकोषः -अमरसिंहविरचितः। सम्पादक - पण्डितहरगोविन्द शास्त्रि। चौखम्बा संस्कृत सीरीज् आफिस, वारणासी। १९७०

वैयाकरणसिद्धान्तकौमुदी – भट्टोजिदीक्षितप्रणीता। आचार्यश्रीगोपालशास्त्री चौखम्बा संस्कृत सीरीज, वारणासी। १९५०

मत्स्यपुराणम्—महर्षिनीकृष्णद्वैपायनप्रणीतम्। गुरुमण्डलग्रन्थमालायास्त्रयोदशपुष्पम्। प्रकाशकः नन्दलालमोरः ५, क्लाइव रोड, कलकत्ता - १९५४।

मनुस्मृतिः - सम्पादकः - नारायणराम आचार्यः 9काव्यतीर्थः"। निर्णयसागर-मुद्रणयन्त्रालयः, मुम्बइ। दशमं संस्करणम्। १९४६

महाभारतम्, भण्डारकर ओरिएण्टाल् रिसर्च ईन्स्टिच्युट्, पुना, Editor, Sukhankar & Others

श्रीमद्भागवतमहापुराणम्, महर्षिकृष्णाद्वैपायनप्रणीतम् गीता प्रेस्, गोरखपुरम् २०१८।

श्रीमन्महाभारतम् – महर्षिश्रीकृष्णद्वैपायनप्रणीतम् गीता प्रेस, गोरखपुरम् २०१४।

श्रीविष्णुपुराणम्, महर्षिकृष्णाद्वैपायनप्रणीतम्। गीताप्रेस, गोरखपुरम् संवत् २०१८।

श्री विष्णुसहस्रनामसत्यभाष्यम् (भागद्वयात्मकम्), पण्डितसत्यदेववासिष्ठसम्पादितं नवीनं संशोधितं संस्करणम्, देवसदनम् मार्गः, भिवानि, हरियाणा (१९९६)

श्रीमद्भगवतगीता, गीता प्रेस्, गोरखपुरम्, संवत् - २०१०

श्रीमद्भगवतगीता, श्रीधर स्वामिकृत संबोधिनी टीका समलंकृता, सनातन प्रकाशन, नव देहेली।

श्रीविष्णुसहस्रनाम शङ्कर भाष्यम्, गीता प्रेस, गोरखपुरम्, संवत् २०६६

श्रीविष्णुसहस्रनाम शङ्कर भाष्यम्, गीता प्रेस, गोरखपुरम्, संवत् २०६६

सहस्रनामस्तोत्र संग्रहः, गीता प्रेस, गोरखपुरम्, संवत् २०६६

**ख-विभागः**

**तुलनात्मकग्रन्थाः**

Bhandarkar, R.G., *Vaisnvism, Saivism and Minor Religious System*. Indological Book House, Varanasi, 1965.

Chatterjee, S.K. & Others (Eds.), *The Cultural Heritage and India*, Six Volumes, Calcutta, 1958 onwards, Reprint 1970.

Dash, Kesab Chandra, *Elements of Research Methodlogy in Sanskrit*. The Kashi Sanskrit series 281 Choukhamba Sanskrit Sansthan Varanasi.

Hopkins, E.W., *The Great Epics of India*, Calcutta, Punthi Pustak, 1983.

Jaiswal, Suvira, *The Origin and Development of Vaisnavism*. Munshiram Manoharlal Publishers, Delhi, 1st Edn. 1967.

Mahapatra, G.N., *The Land of Visnu*, B.R. Publishing Corporation, Delhi, 1979.

Raghavednra T.N., *Sri Vishnu Sahashranama*, Published by : Sri Raghabendra Guruji, Centre for Divine Knowledge, Bangalore-560041, 2002

Several Volumes of Annals of the Bhandarkar Oriental

Research Institute, Poona of different dates.
Vaidya, C.V., *Mahabharata : A Critical Study*,
Winterniz, M. – *History of Indian Literature*, Vol. III (translated by Subhadra Jha), Volume-3, Motilal Banarsidas, Delhi, 1995.

आचार्य, सत्यनारायण, संस्कृत शोधप्रविधिः, पुरी, ओडिशा - २००५
आचार्य शिवप्रसाद द्विवेदी, गीतगोविन्दम् चौखम्वा सुरभारती प्रकाशन् Vanarasi 2012
उपाध्यायः आचार्य बलदेव, पुराण विमर्श, चौखम्बा विद्याभवन, वाराणसि, Reprint, 2009
दिवाण कुन्दर, श्री विष्णुसहस्रनामचिन्तनिका, चौखम्वा संस्कृत सिरिज् अफिस्, Vanarasi, 20001, 2007
भारद्वाज कृष्णदत्त, श्रीविष्णुसहस्रनामस्तोत्रम्, नाग प्रकाशनम् 11/UA/ Jabahar Nagar /110007, 1998
महा पसायत सावित्री, विद्यामन्दिरम्, कचेरि बजार, भद्रक-२००७.
मिश्र कुलमणि, श्री श्री विष्णुसहस्रनाम स्तोत्रम् (उत्कलाक्षरेण) सदग्रन्थनिकेतन, पुरी, तृतीयसस्करणम्, २०१०.
मिश्र आद्या प्रसादः, श्रीविष्णुसहस्रनाम पर्यालोचनम्, अक्षयभट्ट प्रकाशनम् 26, Balarampur House, Allhabad-211002, 2003

**कोषग्रन्थाः**

शब्दकल्पद्रुमः - राजा राधाकान्त देवा – Choukhamba Sanskrit Series Office, Vanarasi Reprint - 2011
संस्कृत हीन्दिकोषः- वामन शिवरामआप्ते मोतीलाल् बनारसी दास दिल्ली - 1973
हीन्दिविश्वकोषः- The Encyclopedia Indica Edited by : Nagendranath Vasu.
B.R. Publishing Corporation. Ashok Vihar, Delhi – 1917, 1st Published Reprint – 2007

**Research Scholar**
**Utkal University**

## उत्कलीयनारीणां संस्कृते अवदानम्

डा. नारायणदाशः

**उपक्रमः** : उत्कलीयाः नार्यः नवदशशतके स्वाधीनतान्दोलनार्थम् अवगुण्ठनं त्यक्तवत्यः। नदनन्तरकाले तासाममूल्यं योगदानमनिर्वचनीयं वर्तते। संस्कृतक्षेत्रे परिवारपरिपालनेन सहैव एताः विश्वविद्यालयेषु महाविद्यालयेषु विद्यालयेषु च स्वगौरवं प्रतिष्ठापितवत्यः। प्रतिभामञ्जरीरथ-मञ्जुश्रीत्रिपाठि-सुनेईदेई-कादम्बिनीदाश-देवयानीदाश-सावित्रीपशायत-अनुराधाजाना-अर्चनारथ-काञ्चनबालासिं-सन्ध्यापट्टनायक-मनोजाप्रियदर्शिनी-प्रमोदिनीपण्डा-हरप्रियादाश-गौरप्रियादाश-अनुपमापुष्टि-शारदासामन्तराय-कवितारथ-सुदीप्तावारिक-मनीषामिश्र-विनोदिनीनाथ-निर्मलानायक-शान्तिप्रियादेवी-सवितादाश-शिप्रामल्लिक-श्वेतपद्माशतपथी-इतिश्रीपाढी-प्रगतिदीक्षित-पराम्बाश्रीयोगमायादयः बह्व्यः उत्कलीयाः कवयित्र्यः न केवलं पदेन प्रतिष्ठिताः, अपि तु संस्कृतशोधक्षेत्रे, प्रकाशनक्षेत्रे काव्यादिरचनाक्षेत्रे लब्धसम्मानाः वर्तन्ते। उत्कलीयाः युवानः यथा महामहोपाध्यायोपाधिना साहित्येकादेमीप्रशस्त्या अनुवादप्रशस्त्या भाऊरावदेवरसन्यासस्य अखिलभारतीययुवसाहित्यकारसम्मानेन सम्मानिताः तथैव सम्मानिताः सन्ति युवत्यःअपि। २००९ ईशवीयसंवत्सरे पराम्बाश्रीयोगमाया भाऊरावदेवरसन्यासस्य अखिलभारतीययुवसाहित्यकारसम्मानेन समानिता, २०१४ ईशवीयसंवत्सरे तु केन्द्रसाहित्येकादम्या युवपुरस्कारेण सभाजिता इति अहोभाग्यं नारीकवीनाम्। अस्मिन् प्रबन्धे अर्वाचीनसंस्कृतसाहित्ये विशिष्टानां कासाञ्चन योगदानं रेखाङ्कितं कर्तुकामा वयम्।

**क. अनुराधाजाना** : विविधपत्रिकासु प्रकाशिताः सन्ति अस्याः कविताः। मातृभूमेः वन्दनेन कविर्लेखनी महीयते। जन्मभूमिः भारतमिति कविता अस्याः कविताभुवनेश्वरी सङ्कलने वर्तते।

**ख. अर्चनारथः** : ओडियाभाषाच्छन्दसा अस्या कविताः क्वचिद्विलसन्ति। गुरुकृपा हि केवलम् इति कवितायां कवयित्री गुरोर्वचनं शिष्यस्यास्त्रभूतं मनुते। यथा—

गुरुणामेव कर्कशवचनं छात्रेभ्यः अमोघमस्त्रम्।
नदस्त्रबलेन नूनं भूमण्डलं भविष्यति सुपण्डितम्।। (पृ. १९, कविताभुवनेश्वरी)

**ग. निर्मलानायकः** : प्रणतिनिवेदनम् इति कवितायां कवेरस्यारात्मननिवेदनं दर्शनीयम्—

चन्द्रिकां मां कुरु देव मस्तकं ते मण्डयिष्यामि
राधां मां कुरु देव मानसं ते रञ्जयिष्यामि।
मीरां मां कुरु देव तव गुणगानं करिष्यामि
कविं मां कुरु देव काव्यं ते रचयिष्यामि।। (पृ. ५२, कविताभुवनेश्वरी)

**घ. पराम्बाश्रीयोगमाया** : इति नाम नवीनानां कथा-काव्य-समीक्षा-अनुवादकाराणां पथप्रदर्शकं वर्तते। अस्या: लेखिकाया: रचनाविश्वमेवं वर्तते-मन्दाकिनी (संस्कृतप्रबन्धसङ्ग्रहः), मृत्यु: चन्द्रमस: (अनूदित उपन्यास:), सम्पर्क:, हे मदीय दूरबन्धो, उपनिषत्सु प्राणविद्या, (शोधग्रन्थ:) च।

**मृत्यु: चन्द्रमस:** : काञ्चन अनूदितकथा: अतिरिच्य एषा डा. गोकुलानन्दमहापात्रलिखितं "चन्दर मृत्युह्ल इति उपन्यासं "मृत्यु: चन्द्रमस:ह्ल इति शीर्षकेण अन्ववदत्। यदा कश्चन पृथिवीवासी चन्द्रपृष्ठं गत्वा कथं चलिष्यति, चन्द्रवासी च कथं जीवनं यापयेत् पृथिवीपृष्ठे। ग्रहोपग्रहयो: आकर्षणशक्ते: भिन्नत्वात् के के दोषा: गुणा: च भविष्यन्ति इति सम्यक् निरूपितं कथाकारेण। उभयो: वैवाहिकसम्बन्धेन को विकार: स्यात्, किं च तस्य समाधानं स्यादिति प्रतिपादयितुकाम: उत्कलावर्तेन सह शाङ्गरीनाया: विवाहं, पुत्रलाभं च वर्णयति। उत्कलावर्तस्य विशेषप्रशिक्षणमपि वर्णयति। ग्रह-प्रतिग्रहाणां वस्तु-प्रतिवस्तूनां च वर्णनेन सह महाकाशे कथं वयोवृद्धि: न भवति, उत्कलावर्तस्य स्वागतं तस्य शततमपौत्र: करोतीति वर्णयता तेन महाकाशभियानमपि सुष्ठु प्रतिपादयति। तत्र १९६९ संवत्सरे अमेरिका-ऋष्-भारतदेशै: कृतो नवसंरम्भ: अप्यत्र वर्णित:। किं बहुना सम्पर्करूपेण अत्र संस्कृतभाषा एव स्वीकृता वर्तते।

**सम्पर्क:** : इति कथाग्रन्थ: अस्या: ऐषम: साहित्येकादम्या: युवपरस्कारेण सभाजित:। अत्र सङ्गृहीता: कथा: तदा तदा पत्रिकासु प्रकाशिता:। कथासङ्ग्रहस्य नाम सम्पर्क इति अन्तिमकथाया: सम्पर्को नामहीन इति कथाया: नामानुसारेण कथासङ्ग्रहस्य नाम निश्चितं लेखिकया इति प्रतिभाति। अथवा सर्वासु कथासु नायिकाभि: सह अपरेषाम् अपरासां च ये सम्पर्का तत्सम्बद्धाश्च मनस्तात्त्विकविशेषा दरीदृश्यन्ते ते एव कथासङ्ग्रहस्य नामकरणे बीजभूता: स्यु:।

अत्र भाग्यबलमुत निष्ठाबलमिति कथाया नायिका सुमित्रा पत्येकनिष्ठा। सामान्यभारतीयनारीणां कोमलस्वभावानांचरित्रानुगुणा पापशङ्का बाधते ताम्। एतदत्र परिलक्षणीयं यत् कश्चिदपि भावस्तस्या मनसि क्षणादूर्ध्वं न तिष्ठति। सुजाताया: श्वश्रू: तादृशीनां नारीणां प्रातिनिध्यं वहति या: स्वीयलघुस्वार्थायनारीणां शोषणं सर्वनाशं च कुर्वन्ति। स्वयं नेत्री सा स्ववधूं नेत्रीं द्रष्टुं नेच्छति। अपरस्या: पुत्र्यै कष्टं प्रददती सा स्वपुत्र्या अल्पाहारविषये बद्धादरा वर्तते। नेयं समस्या नारीणां पुरुषाणां वा। समस्येयं समाजस्य। सामाजिकानां सार्विकमूल्यबोधस्य अधोगतिरेव एतादृशीनां समस्यानां मूलम् इत्यवगन्तव्यम्। पद्माया निम्नवर्गीयत्वमाश्रित्य यै: पद्मादित्ययोर्विवाहो निराकृत: आदित्यस्य पद्माया वा सुखमतिरिच्य वर्गे मतिं सन्दधानैस्तै: तयोर्जीवनस्य एकाकित्वस्य दु:खस्य वा भागो न ऊढ:। पापपुण्ययोर्मीमांसा न सरला। तदेव किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिता: इति गीतावाक्यम्। पापपुण्ययोर्मीमांसा सम्यक् कृता रचयित्र्या। यथा समाजे सौभाग्यवत्य: सुखिन्य: नीता: सन्ति, तथैव पापपङ्किलसमाजस्य पापे लीना: लीना: अपि सन्ति। स्वपापेन ता: लीना: पापिनी: कृतवान् समाज: तासां सन्ततीरपिपापात् न मोचयितुमीहते। स्वार्थं समीहमान: समाज: ता: सन्ततीरपि पापे निक्षिपति। तस्मादेव लीना: नीतानां जीवनेषु प्रविश्य तासां सुखं नाशयन्त्य:

स्वसन्ततीनां रक्षायै यतन्ते। एतादृश्यां स्थितौ वस्तुस्थितिं ज्ञातुं यथा प्रयतनीयं नीतादय: तथा नाचर्य पतिं सन्देहबाणेन विध्यन्त्य: परिस्थितिं घोरतरां कुर्वन्ति। यदि प्रथमदिने एव स्पष्टं नीतया सर्वो विषय: पत्ये निवेदिनं स्यात् तदा तस्या: सौख्यपूर्णे परिवारे विवाहविच्छेदस्य कथा नायात्। भवेशेनापि वस्तुस्थितिं ज्ञातुं प्रयत्नो न कृत:। उभाभ्यामपि परस्परं प्रति अनर्थकसन्देहेन विपरीतव्यवहारेण चपरिस्थितिरवनतिमेव नीता। दम्पत्यो: परस्परं प्रति श्रद्धाविश्वासावेव सुखमयपरिवारस्य मूलमिति प्राचीनानां कथनं पुनरेकवारं प्रतिपादितं लेखिकया। कथाया रचनाशैली मनोरमा। कथावस्तुन्यपि वैचित्र्यं दरीदृश्यते।

महानगरीयजीवनशैल्याम् निगमनिकायीयसंस्कृतौ (कर्पोरेट्-काल्चार्) अभ्यस्तानाम् आजीवनं वृत्तिप्राप्तये एव नीतिशिक्षारहितशिक्षाम् अधीयानानांयुवकानां नारीणां विषये दृष्टिरेव लेखिकया अज्ञातं मीरा-विबुधयो: सम्पर्कस्य नाम। अद्यत्वे अमीमांसित: कश्चन प्रश्न: अस्माकं पुरतस्तिष्ठति, जीवनाय आजीविका उत आजीविकायै जीवनम् इति। तस्य सम्पर्क: केवलं मीरया सहैव अस्ति उत अन्याभिरपि अस्ति इत्यपि सन्दिग्धमेव। भाग्यबलमूत निष्ठाबलम्, धूमाभाजीविका इति कथयो: वस्तुन: अपेक्षयाचरित्राणां भावनानां विचारणं कृतवत्या लेखिकया स्पष्टत एवभाववादस्य (एहूगर्सईूतेस्) आश्रय: कृत:। प्रतीक्षा, संशय:, प्रणयोपकथा इति कथासु लेखिकायां रोमाण्टिक्-वादस्य (र्दर्सेहूग्म्मेस्) छाया दृश्यते। सर्वा अपि कथा: नारीवादेन प्रभाविता:। किन्तु यथा नारीवादिनां बहूनां लेखेषु सर्वे पुरुषा दुष्टा भवन्तीति काचिद् अवधारणा दृश्यते न तथात्र लेखिकाया भावना। कासुचित् कथासु समाजस्य दु:स्थिती: स्पष्टशब्दै: वर्णयन्त्यां लेखिकायां रोमाण्टिक्-विरोधवादस्य (ेंहूग्दर्सेहूग्म्मेस्) छायापि दृश्यते एव।

**हे मदीय दूरबन्धो**: इति पराम्बाया: काव्यसङ्ग्रह:। शीर्षकमत्र स्थानिताया: मेधप्रबोधनम्" इति कविताया: उपान्तपङ्क्ति:। असमये प्रभूतवारिवर्षणमेकदा मनसि भावान्तरमजनयत् तथा मेघप्रबोधनमिति कविताया: सृष्टि:। पृथिवीमेघयो: नायिकानायकत्वारोप: अत्र। पङ्क्तिरियं पृथिवीनायिकाया: उक्ति: मेघं प्रति। प्रीतिरूपं विप्रलब्धाया:" इति कवितायामपि दूरबन्धुशब्द: प्रयुक्त: अस्ति। "बध्नाति स्नेहेन हृदयम्ह्ल इति बन्धु:। दूरस्थ: बन्धु: यस्य स: दूरबन्धु:। दूरे प्रिया यस्य स इत्यर्थ: द्योतित: भवति। अत्र परस्परं दूरत्वं तु स्पष्टम्। असमये अनारतं वारिपात: अथवा अनावृष्टि: पृथिवीनायिकाया: कृते मेघस्य अस्वाभाविकता अथवा असहायता। दूरबन्धु शब्देन उभयो: एकदेशावस्थानराहित्यं संसूचितं भवति। भूमिमेघयो: एकदेशावस्थानं न सम्भाव्यते लोकद्वयत्वात्-पृथिवीलोक: अन्तरीक्षलोकश्चेति। एवं जीवब्रह्मणो: दूरत्वं (१-१४ कवितासु) सामाजिकतत्त्वेभ्य: साम्प्रतिकसमाजस्य दूरत्वं (१५-३३ कवितासु) तथा समाजे कस्मिंश्चित् कोमलमधुरसम्पर्के दूरत्वमिति (३४-५० कवितासु) वर्णितमिति पृष्ठभूमिमाधृत्य कवितासङ्ग्रहस्यास्य शीर्षकं हे मदीय दूरबन्धो" इति।

आशा-तव नीरवतायां मे असहायता, न जाने, षट्पदी, त्वमेव, अभियाचनम्, त्वदपि किमधिकम्, मम दु:खनीरे, तव पुरत:, केन सर्वं भावितम्, मनसो यात्रा, सत्पथे, सोत्तराऽऽत्मरति:, तवागमनम्, कदा दुर्गति:, विश्वास:, श्रद्धा, आदर्श:, अभिसारिका, नारी, हे अतीतकाल, संस्कृति:, मान:, केयं व्यवस्था ? सङ्कणकप्रतीके, कविता, सुयोग: सुवर्ण:, वर्षाकाल:, प्रतिबद्धा, दिवास्वप्न:, लोकहितार्थम्, प्रश्न:, क्लिष्टा तन्द्रा, का कथा कथाया: ? प्रीतिरूपं विप्रलब्धाया:, मेघप्रबोधनम्, तथापि, कीदृश: प्रणयी त्वम्, चित्रीकृत:, तव चर्यायाम्, अतन्द्रा रजनी, अनूढाया: स्वप्न:, प्रगल्भा, किं याचिष्ये, तव प्रीति: प्रतीक्षते, त्वत्प्रणयप्रतिविम्बे, प्रतीक्षा विप्रलब्धाया:, त्वदधिकृतहृदि, मनोगतम्, लय:, द्रष्टा इत्यादि ५१ कविता: विलसन्ति। एतासु प्रायेण २५ कविता: लोकभाषासुश्री-अमृतभाषा-काव्यमहानदी-काव्यवैतरणी-कविताभुवनेश्वरी-पत्रिकासु प्रकाशिता: पाठकैरभिनन्दिता: सन्ति।

जीवात्मन: प्रेयसीत्वं तथा परमात्मन: प्रेष्ठत्वं तु प्रतिमनुष्यं सत्यम्। संसारचक्रे जीव: निश्चयेन स्वप्रियविरहित:। अत: जीवयात्रा भवसागरात् आनन्दसागरं यावत् (यात्रा मे अदृश्यपदपर्यन्तं महोदधित:, मनसो यात्रा, पृ. २३)। अनन्यमनसा प्रियचिन्तनं विषयभोगेषु निरतेषु अपि शक्यम्।

भुञ्जानोऽपि निजारब्धमास्थातिशयतोऽनिशम्।
ध्यातुं शक्तो न सन्देहो विषयव्यसनी यथा।। (पञ्चदशी, ध्यानदीपप्रकरणम्, ९/८३)

न जाने कवितायां यथा—

काहं ? कुतरागता ? कुत्र पुनर्मे गमनम् ?
किं लक्ष्यं जीवनस्य ? कुत्र पुनर्मे विलय: ?
न जाने त्वदृते किञ्चित्
प्रभो ! न जाने, न जानेऽहम्।। (पृ. १३)

केन सर्वं भावितम् कवितायामादिस्रष्टुरनुसन्धानं कवे: प्रतिभां प्रमाणयति यथा—

केन रचिता मधुरहासा बालानामधरे ?
केन खचितं नक्षत्रञ्च गगनमण्डले ?
सखि ! केन सृष्टश्चन्द्रमा हि दिवसप्रान्ते रे
पश्य सकृत् को हि तत्र नीलकन्दरे।।
केन घटिता मेघे मेघे वृष्टिबिन्दव:
केन रचितं शिखित: पिच्छं वर्णमण्डितम्।
सखि ! केन दृष्टं केन रचितं सूर्यमण्डलं
पश्य पश्य त्वैकवारं चक्रनेत्रकम्।।
मन्दिरस्य वर्णो य: स देवताया: पुन:
तस्य कृष्णवर्ण एषो जगदाच्छादक:।
सखि ! त्वं तु पश्य कृष्णमेघं शिखीकृतमनसा

यस्मिन् मेघे शोभन्ते हि कला: षोडशा:।। (पृ. २२)

एवं संसारक्षेत्रेऽपि। स्वप्रियविरहजं दु:खं किञ्चित् विलक्षणं भवति। आपातत: दिनचर्यासु कालं यापयन्त्यपि विप्रलब्धा क्षणमात्रमपि स्वप्रियं न विस्मरति। सदैवासन्नप्राप्ते: आशाबन्ध:। प्रतिक्षणं स: बन्ध: भग्न: भवति तथा परक्षणे पुन: प्ररोहति। एवं प्राप्त्यप्राप्त्यो: छायाश्रिता: कविता:। प्रायेण कस्यचिदन्तस्तत्त्वस्याभावबोधस्य व्यथा अत्रत्यानां कवितानामन्त: स्वर:। केयं व्यवस्था इति कवितायां यथा—

बालो विस्मरति धूलिकाक्रीडां
यन्त्रांशघर्घरे स्वशरीरपीडाम्।
निजयति विस्मर्तुमुदरबुभुक्षां
गृहजना वाञ्छन्ति उपार्जनक्षमताम्।।
सार्वभौमगणतन्त्रे रीतिरेषा
केयं सभ्यसमाजव्यवस्था ? ?
सुपरियोजितेऽप्यैषा दुरवस्था
कीदृशी स्थिति: केयं व्यवस्था ? ?
पुरूषेण सह समस्वरोत्तोलिनी
नारी जीवनसङ्ग्रामेऽभिनिवेशिनी।
पुरूषस्य प्रतिपदं पदस्थापिनी
सहनशीला मानोन्मत्ता वा रमणी।।
देवालये दास्या: प्रथितं नृत्यं
नार्यायोगेन भृशं वारितम्।
स्वातन्त्र्यापघातभीतिर्नास्ति तदानीं
पञ्चतारकामध्ये नृत्यं परिवेषयन्तीम्।।
सत्यं रोरुद्यते नैतिकतामृतौ
भारायते आदर्शजीवनं समाजे।।
अपसंस्कृतेरनुगता एषा
दुराग्रहग्रस्ता समाजव्यवस्था।। (पृ. ४७-५०)

मान: कवितायां कवयित्री भारतीयसंस्कृते: जयगानं करोति यथा—

न रोचते अपसंस्कृतेरनुप्रवेश:
न रोचते राष्ट्रस्य कृते विरोधाभास:।
न सह्यते परिवारेऽवबोधाभाव:
न गृह्यते कस्यानधिकाराचार:।।

न शोभते साम्यवादे आरक्षणं
न रोचते उग्राधुनिकताप्लावनम्।
न सह्यते प्रतिष्ठापघातस्तु देशस्य
न गृह्यते कदाचिद् वशतापि कस्य।। (पृ. ४५-४६)

मुक्तच्छन्दसा लिखिता: एता: कविता:। कदाचिदन्तर्मनसि गुञ्जायमाना सती कविता गीतिमयतां सृजति। यथा— न जाने, अभियाचनम्, त्वदपि किमधिकम्, मम दु:खनीरे, केन सर्वं भावितम्, लोकहितार्थम्, का कथा कथाया:, मेघप्रबोधनम्, किं याचिष्ये, तव प्रीति: प्रतीक्षते इति।

**ङ. प्रतिभामञ्जरीरथ:** जन्मभूमे: कटकनगरस्य वन्दनया मुखरीभवति कवयित्रीयं भाति कटकनगरमिति कवितायाम्—

शुभ्रमहानदतटिनीसेवितं वारवाटी-गड-मण्डितम्, भाति कटकनगरम्
उत्कलजननी वीरप्रसविनी हृदय-लसन्निष्कम्, भाति कटकनगरम्
नेताजीसुभाष-रथ-राधानाथ-मधुसूदनगौरवम्, भाति कटकनगरम्
रौप्यसुवर्णादिविपणिप्रचुरं चारुकलाभास्वरम्, भाति कटकनगरम्।।
।। पृ. ३८-३९, काव्यवैतरिणी।।

कवयित्रीयं स्वानुभूतिं कथां वा प्राकृतिकशक्त्या पूरयित्वा पूर्णतामधिगन्तुमिच्छति। यथा—

मम यावन्तीं कथां/ कवितायां वदेयम्।
यथा धान्यक्षेत्रं शब्दायते पवनस्य हिल्लोले/
यदा सूर्य: प्रसरति कात्तिकस्य कोमलप्रत्यूषे।
प्रकाश्यते कवितायाम्/ मम सकलाभिलाष:। ...।
ततोऽहं वदिष्यामि लीलया कविताम्/ सूर्य इव, वायुरिव, चित्रपतङ्ग इव।
शिशिरस्य शब्द इव, वर्षेव, नदीव,/ कार्त्तिकस्य कोमलातपमिव।
(पृ. ९, कविताभुवनेश्वरी)

**च. प्रतिमाषडङ्गी** : भुवनेश्वरे विजेवीमहाविद्यालये अध्यापिका एषा देशभक्तिपरायणा देशवन्दने निपुणा वर्तते। एतस्या: जयतु भारतम् इति कवितायां यथा—

शान्तिमैत्रीदायकं जातिभाषामण्डितम्/ त्रिंशत्प्रदेशसुशोभितम्/ मनोरमं मातृभूमि-पितृभूमि-भारतम्/ मामकं भारतम्/ जयतु भारतम्।। (पृ. १४, कविताभुवनेश्वरी)

**छ. मञ्जुश्रीत्रिपाठी** : स्वयमुत्तमं गायिका गीतसंस्कृतमिति अडिओक्यासेट् निर्देशनां कृतवती। ललितकला एव मोक्षदायिकारूपेण स्तुता तया मोक्षदा-कवितायाम्।

चतुषष्टिकलासु या ललिता इति विश्रुता।
सा सदा हृद्यमुग्धा च सर्वमोक्षप्रदायिका।।
धर्मार्थकाममोक्षदा सकलासु कलासु या।

भावरसे प्रमुदिता सर्वमोक्षप्रदायिका।।
शुभदायै वरदायै शुखदायै नमोनम:।
सर्वसिद्धिप्रदात्री च सर्वमोक्षप्रदायिका।। (पृ. ३६, कविताभूवनेश्वरी)

**ज. मनीषामिश्र:** : इत्यनया एतदेव जीवनम् इत्यत्र जीवनस्य नवीना दिक् निरूपिता। सर्वस्य मूलं गोविन्दभजनमिति सार:।

**झ. मनोजाप्रियदर्शिनी** : नूतनतया अनया कविता: लिख्यन्ते। काश्चन कविता: अस्या: उत्कलीयभजनानामनुसर्जनात्मकं वर्तते। नास्ति मे जपवलम् इति कविताया: अंश: अस्या: द्रष्टुं शक्या:। यथा—

नास्ति मे जपवलम्/ न च तपोवलम्/ न ज्ञानवलम् न वा धर्मवलम्/ गच्छामि प्रभो अहमेका एका/ तव नाम धृत्वा/ प्रभो तव नाम धृत्वा। (पृ. २१, कविताभुवनेश्वरी)

**ञ. विनोदिनीनाथ:** : महर्षिमहाविद्यालये कार्यरता एषा मुक्तच्छन्दसा परमात्मन: सत्तां चेतनां चाविष्करोति समन्तत:। अनन्या चेतना इति कवितायां यथा—

त्वमेकक:/ स्वतन्त्र: एकक:/ परिपूर्णा परमा चेतना/ मम चिन्ता विचारचेतना/ सकला वै तव प्रचोदना/ तव दर्शनमुहूर्त्ते/ अद्भुत-आच्छन्न-चित्तम्/ अस्मिताया: सूत्रमवलुप्तम्/ अवलुप्तं ममत्वचिन्तनम्/ इतरेण किं वा प्रयोजनम्/ त्वमेव हि सर्वे स्वप्ना:/ सर्वा आशा:/ सर्वा सम्भावना:। . . .।

अस्मिन् हृदि/ चित्तवलये च/ अवारितं पूर्णां कुरु/ अन्तहीनां श्रद्धाम्/ अनन्यां चेतनाम्। (पृ. ३३-३४, कविताभुवनेश्वरी)

**ट. शान्तिप्रियादेवी** : वाणीविहारे संस्कृतविभागे कार्यरताया: अस्या: काव्येषु नारीवादस्य नारीसम्मानस्य नारीसहकारस्य स्वाद: वर्तते। नारीति कवितायां सा नार्य्या: सहकारं समग्रीकरोति—

सृष्ट्यर्थं च सदा पुंस: सहयोग: स्त्रिया सह।
एकं चैकां विना सृष्टि: सम्भवति तु नैव वै।।
गृहेषु च स्त्रिया: स्थानं सदैव विद्यते महत्।
गृहिणीं च विनारण्यं गृहं भवति सर्वदा।।
सेयं सुता च पत्नी च भवति जननी पुन:।
क्लेशस्तु मातृरूपेण तस्या: सर्वाधिको गृहे।।
पालने पोषणे नित्यं पित्रो: क्लेशोऽस्ति सर्वदा।
मातुरेव तु क्लेशस्तु पितुरेवाधिक: पुन:।।
एतदर्थं तु शास्त्रैर्वै दृढकण्ठैस्तु घोष्यते।
सा सहस्रगुणैर्माता पितु: पूज्यास्ति सर्वदा।।
गृहेषु तु यत: स्थानं भार्या भवति वै महत्।

तदर्थमेव सम्मानं शास्त्राणि घोषयन्ति वै।।
सम्मानमस्तु वै नित्यं नार्या गृहेषु वै सदा।
समुन्नतिं च प्राप्नोतु सर्वविधां गृहं पुन:।। (पृ. ५७, कविताभुवनेश्वरी)

**ठ. शिप्रामल्लिक :** : कटके रेमेन्सामहाविद्यालये कार्यरताया: शिप्राया: क्षिप्रगति: पुरीं प्राप्नोति नीलाचलमाधुर्या आकृष्यमाणा। स्वरलयविभाविता एतस्या: कविता भक्तिभावभाविता विजयते। यथा—

नीलकमले कमनीय: यथा किञ्जल्कविभावैभवम्।
नाभिकमले स्वयं स्वयम्भू: हृदयकमले कौस्तुभम्।।
ललितललाटे लसितकुन्तले ललाटिकाचारुविशोभितम्।
नीलकमलिनी प्रभाविलेपिनी निशिथिनीचारुचन्द्रायितम्।।
माधवमाधुरीमोहनमूर्च्छना हृदयकन्दरे मर्मरितम्।
नीलाम्बरे पीत: पूर्णरागशोभा श्रीदेहे दूकुलं विभावितम्।।
(पृ. ५९, कविताभुवनेश्वरी)

अयि सुरभारति कवितायां सरसां सुरभारतीं स्तौति कवयित्री—

अयि सुरभारति, अन्त:सलिले सरस्वति।
कथं प्रवहसि नीरसच्छन्दसि मरुस्थले।
सुधास्यन्दिनि, सरसरसमयि, विलासिनि,
कथं सीदसि नीरवमनसि मौनानले। ...
छिन्धि बन्धनम्, विमोचयावरणम्,
पुनरायाहि नवकलेवरा सती, मधुच्छन्दोघारा इव।
रसाणितान् कुरु प्राणान् असङ्ग्जनानाम्,
भवतु ते ज्ञानमन्दाकिनी, क्षपितकलाङ्का, चिरनिनादिनी।। (पृ. ३९, काव्यमहानदी)

**ड.सुदीप्तावारिक :** : अस्या नवलेखिकाया: आदर्शप्रणोदिता भावना स्फुरति एतस्या: काव्येषु-सत्यमेव जयते आदिषु।

**ढ.सुनेईदेई :** विविधपत्रिकासु प्रकाशिता: अस्या: शोधप्रबन्धा:, काव्यानि च हृदयाह्लादकानि सन्ति। भारतीयसंस्कृते: वन्दने कवयित्र्या: लेखनी प्रत्यग्रा भवति-सुभारतीयस्य हि सैव संस्कृति: इति कवितायाम्। सुभारतीयस्य हि सैव संस्कृति: इति चतुर्थपादरूपेण स्वीकृत्य दश श्लेकान् अत्र प्रणयति इयम्। यथा—

परोपकार: परदु:खनाशनं परस्य कल्याणसुखाय चिन्तनम्।
परस्य वित्तादिसुरक्षितक्रिया सुभारतीयस्य हि सैव संस्कृति:।।
सुभाषणं सात्त्विकखाद्यसेवनं सुदर्शनं सुन्दरवस्त्रधारणम्।

स्वभावशुद्धाचरणं सुकोमलं सुभारतीयस्य हि सैव संस्कृतिः।।
विभिन्नधर्मैः सततं विभूषिता विभिन्नभाषाभिरतीवशोभिता।
समस्तविद्याविभवैः प्रमोदिता सुभारतीयस्य हि सैव संस्कृतिः।।
(पृ. १७, कविताभुवनेश्वरी)

**उपसंहारः** : उपर्युक्तालोचनात् प्रतीयते यत् नगण्यमिति विभावितमुत्कलीयकवयित्रीणां संस्कृतसाहित्यमपि कयापि भाषया स्पर्धितुमलमिति। एतासु कासाञ्चन भक्तिभाविताः कविताः, काश्चित् प्रीतिसम्बलिताः पुरातनसंस्कृतसाहित्यस्य गन्धं प्रददाति। शान्तिप्रियादेव्याः पराम्बायाश्च काव्येषु आधुनिकयुगस्य नवीनाः प्रतिमानाः लभ्यन्ते। विशेषतः नारीसमस्या-नारीसम्मान-नार्यधिकारविषये अनयोः लेखनी गर्जति। नारीमनसो व्यथां नारी एव ज्ञातुं प्रभवति। पराम्बायाः नारी कवितायां यथा—

यस्मिन् सा विश्वसिति
सस्तां विद्रूपयति शतधा विदारयति
सुरक्षायाः कैतवेन असहायां करोति
प्रवञ्चनाया विषावर्त्ते क्षिपति।
लीलुपदृष्टया लुण्ठनादनन्तरं विश्वासं हलाहलयति
येन सा हतवाक् हतप्रभा
तत्कृते मृत्युः श्रेयस्करः प्रतिभाति।। ...
सभासमित्योः प्राबल्यं नारीजागरणाय
सभास्थलान्तराले चीत्करोति नारी सुरक्षायै।।
को दास्यति सुरक्षा नग्नसमाजे
भग्नमानसिकता नैतिकताभावे।
शब्द एको नारी पणीभूताद्य
मारिता वा लाञ्छिता वापहृता सद्य।
न ज्ञायते एषा समाजस्य पुरुषस्योत सृष्टेः विकृतिः।। ...।
तथापि जीवनधारा नार्या विश्रामरहिता
समाजसन्तोलनं यथा पूर्वं परं तथा।
तस्ताः कृते नाभवत् विघटिता वा नूतनता
सैव स्थितिः असहनीयतायामपि सोढव्या
नोचेत् कथं तिष्ठेत् तस्या जिजीविषा,
कुत्रचित् परिवारे ज्येष्ठा कन्या सा
कुलस्य कृते सर्वविधाशा,

सामान्यदृष्टया सा नाद्य गृहवन्दिनी
जीवनेसङ्ग्रामे सा कुन्ती उत याज्ञसेनी,
शतयन्त्रणामध्येऽपि कुन्ती राजमाता
शतविद्रुपमध्येऽपि कृष्णा पतिव्रता,
शतनिर्यातनामध्ये सा सृष्टिरपरा
देवकृपाप्राप्ता उत अभिशप्ता ?
जननी भगिनी उत जाया प्रेमसिक्ता !! (पृ. ३९)

अपि च एता: विहाय अन्या: बह्व: स्वक्षेत्रे प्रतिष्ठिता: सन्ति, यासामालोचनं प्रामाणिकतथ्याभावात् अद्यावधि न जातम्। उत्कलीययुवजना: न केवलं काव्ये प्रवीणा:, शास्त्रेष्वपि प्रवर्तते तेषां धीषणा। स्वर्णलतापण्डा-श्वेतपद्माशतपथी-सावित्रीपण्डा-इतिश्रीपाढी-प्रगतिदीक्षित-पार्वतीण्डा-ऋचाविश्वालानां गवेषणा संस्कृतशोधक्षेत्रे दिङ्नर्देशं करोति। अत: प्रत्येकस्य उत्तरदायित्त्वं वर्तते, संस्कृतमातु: समृद्धभाण्डागारं सुसमृद्धं कुर्वतीनां नारीकवीनामपि समीक्षणं कुर्यात्। सत्यमुक्तं कविना—

मातृभूमिमातृभाषयो: ममत्वं यस्य हृदि न तिष्ठति।
तं यदि ज्ञानिगणे गणयाम: अज्ञान: कुत्र यास्यति।।

**सन्दर्भग्रन्था:** :

१. मन्दाकिनी (संस्कृतप्रबन्धसङ्ग्रह:) सरस्वती, सरस्वतीविहार:, भद्रक:, २००७

२. मृत्यु: चन्द्रमस: (अनूदित उपन्यास:) संस्कृतभारती, नवदेहली, २००९
३. सम्पर्क:, (संस्कृतकथासङ्ग्रह:), संस्कृतभारती, नवदेहली, २०११
४. हे मदीय दूरबन्धो, (संस्कृतकवितासङ्ग्रह:), सवितादाश:, १७/७३, आचार्यपल्ली, नरेन्द्रपुरम्, कोलकाता-७००१०३, २०११
५. उपनिषत्सु प्राणविद्या, (शोधग्रन्थ:), प्रतिभाप्रकाशनम्, दिल्ली, २०१३
६. कविताभुवनेश्वरी, मुख्यसम्पादक:-प्रफुल्लकुमारमिश्र:, साधारणसम्पादक:-मनमोहनआचार्य:, स्नातकोत्तरसंस्कृतविभाग:, उत्कलविश्वविद्यालय:, भुवनेश्वरम्, ओडिशा, २००६
७. काव्यामहानदी, मुख्यसम्पादक:-प्रफुल्लकुमारमिश्र:, साधारणसम्पादक:-मनमोहनआचार्य:, स्नातकोत्तरसंस्कृतविभाग:, उत्कलविश्वविद्यालय:, भुवनेश्वरम्, ओडिशा, २००५
८. काव्यगोदावरी, मुख्यसम्पादक:-प्रफुल्लकुमारमिश्र:, साधारणसम्पादक:-मनमोहनआचार्य:, स्नातकोत्तरसंस्कृतविभाग:, उत्कलविश्वविद्यालय:, भुवनेश्वरम्, ओडिशा, २००४

Assistant Professor in Sanskrit
R.K.Mission Residential College
Narenderapur, Kolkata

# पुराणेषु राष्ट्रिया भावना

डॉ.गगनचन्द्रदे

राष्ट्रियताया निर्मलधारा पुराणेषु प्रवाहितास्ति, सा अतुलनीयाऽस्ति, भारतवर्षीयमनुजानां धर्माचरण-कर्मयोग, निष्कामसद्व्यापारै र्यो ऐहलौकिक-पारलौकिकौ च अभ्युदयनिःश्रयसौ उपलभ्यौ स्तः। पुराणेषु भारतभूमि-गौरववर्णनप्रसङ्गे देवानां कथनमस्ति यत् जीवैः सहस्रजन्मानन्तरं महत्पुण्योदये सति भारतवर्षे जन्मग्रहणस्यावसरो लभ्यते । देवा निरन्तरमिदमेव चिन्तयन्ति यद् यैः स्वर्गापवर्गयोमार्गभूते भारतवर्षे जन्म गृहीतमस्ति, तथा ये फलाकांक्षारहिताः कर्माणि परमात्मनि समर्प्य निर्मलाः सन्तः तस्मिन्ननन्ते लीयन्तेऽते देवतापेक्षया धन्यतमाः सन्ति, सर्वाणि पुराणानि भारतभूमेः पवित्रतायाः अपराजेयतायाः गौरवशालिपरम्परायाश्च द्योतकानि सन्ति । ब्रह्मपुराणे, विष्णुपुराणे, गरुडपुराणे समानरूपेण भारतभूमेः प्रशंसा कृता अस्ति । "भारतभूमिः कर्मभूमिः" अस्ति, अतः देवता अपि अत्र जन्मग्रहीतुमुत्कण्ठिताः भवन्ति । यथा –

गायन्ति देवाः किल गीतकानि धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदहेतुभूते भवन्ति भूयः पुरुषाः सुतत्वात् ।।[१]

वेदेषु राष्ट्रियताया उदात्तरूपं सर्वप्रथमं दरीदृश्यते । अथर्ववेदस्य पृथिवीसूक्ते "माता भूमिः पुत्रोऽहं पृथिव्याः" कथनेन प्रतीयते यत् ऋषिः मातृभावनाया सम्पूरितो भवति । यदि राष्ट्रे मननशीलेषु प्राणिषु एकतायाः भावो न विद्यते तर्हि विविधगुणैः सम्पन्नाः मातृभूमिः समृद्धं राष्ट्रं न सृजति ।

पुराणेषु स्वराष्ट्रस्य धारां, जनान्, संस्कृतिं, सभ्यतां, धर्मेतिहासौ, जीवनदर्शनं, पर्वतान्, नदनदीः, तीर्थानि, शास्त्राणि, परम्पराञ्च प्रति गौरवस्य भावनैव राष्ट्रिया भावना । यदा कश्चित् व्यक्तिः राष्ट्रं प्रति देशस्यामूल्यनिधींश्च प्रति गौरवम् अनुभवति तदेव राष्ट्रं प्रति चिन्तनस्य भावना विकसति । राष्ट्रस्य नदीपर्वतसागराणादिनां भूभागस्यालङ्कारिकं वर्णनं, सामाजिकीव्यवस्था, राष्ट्रमङ्गलकामनेत्यादयः राष्ट्रिया भावना पुराणेषु विभिन्नरूपेण दृश्यते ।

भारतस्य राजनैतिकसामाजिकाध्यात्मिकीनां विचारधाराणां भाण्डागाराणि पुराणानि एव सन्ति । राष्ट्रचिन्तनस्य भावोद्दीपनार्थं पुराणेषु भारतभूमिं प्रति श्रद्धा, आस्था, देशस्यास्य अखण्डता, यज्ञस्य महत्त्वं, राजस्य समृद्धिः, राज्ञः कर्त्तव्यं, पर्वतान् नदीश्च प्रति आत्मीयतायाः भावः, तीर्थानि प्रति श्रद्धायाः विस्तृतोल्लेखः विहितोऽस्ति ।

**(क) भारतवर्षस्य नामकरणम् –**

भारतवर्णने व्यासेन भौतिकसंसाधनानां वर्णनं न कृतमपितु तत्र जीवनरक्षकाणां हिमालयगङ्गासमुद्रादिजलतत्त्वानां, सरस्वत्यादि ज्ञानात्मकतत्त्वानाञ्च वर्णनं विहितमस्ति । महर्षिणा व्यासदेवेन आचार्ययास्कस्य भारतवर्षस्य निर्वचनानुसारमेव भारतवर्षस्य नाम्नः निर्वचनं कृतं यत् प्रजानां भरणपोषणकारणादेव देशस्यास्य नाम "भरत" इति विश्रुतम् । तद्धि –

"भरणाच्च प्रजानां वै मनुर्भरत उच्यते ।[२]

"निरुक्तवचनाच्चैव वर्षं तद् भारतं स्मृतम् ।[३]

पुराणानां वर्णनानुसारं स्वयम्भुवमनुः अस्य सृष्टेः प्रथमः पुरुषः आसीत् । मनोः वंशपरम्परायाम् ऋषभदेवस्य शतपुत्रेषु प्रथमः सर्वश्रेष्ठो भगवद्भक्तः भरतोऽजायत । वायुपुराणे वर्णनमस्ति यत् ऋषभदेवेन स्वशतपुत्रेषु ज्येष्ठपुत्रं भरतं राज्यसिंहासने संस्थाप्य वानप्रस्थाश्रमस्याश्रयणं गृहीतम् । अतः तत्कालात् हिमवर्षं भारवर्षमिति नाम्ना विख्यातम् । यथा –

ऋषभाद्भरतो यज्ञे वीरः पुत्रशतात्मजः ।
सोऽभिषिच्याय भरतं पूर्व प्रावज्यमास्थितः ।।
हिमाह्व दक्षिणं वर्षं भरताय व्यवेदयत् ।
तस्मात्तद्भारतं वर्षं तस्य नाम्ना विदुर्बुधा ।।[४]

प्रायः सर्वेषां पुराणानामाधारेण निस्संशयं वक्तुं शक्यते यत् ऋषभदेवस्य पुत्रस्य भरतस्य नाम्नैवास्य देशस्य नाम भारतवर्षं सञ्जातम् ।

**(ख) कर्मभूमिरूपे भारतस्य वैशिष्ट्यम् –**

भारतभूमिविषये ब्रह्मपुराणे लिखितमस्ति यत् अत्रत्याः भारतवासिनः, भाग्यशालिनः, स्वस्थाः, तपस्विनः, दानशीलाः, याज्ञिकाः, वैष्णवाः, सदाचारिणः च सन्ति । कर्मभूमिरियं भारतभूमिः । ब्रह्मपुराणे जम्बुद्वीपवर्णने पुराणकारः व्यासदेवेन वर्ण्यते –

उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तद्भारतं नाम भारती यत्र सन्ततिः ।।[५]

भारतवर्षे ज्ञानविज्ञानाध्यात्मिकोन्नतेः परिपूर्णता दृश्यते । समेषां विशेषज्ञः भारतीयो विद्वान् आसीत् अस्ति भविष्यति च, यथोक्तं मनुना स्वकीयायां स्मृतौ –

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।।[६]

एतदर्थम् अयं भारतदेशः जगद्गुरुपदेनाऽपि समाद्रियते । भारतवर्षे ज्ञानविज्ञानाध्यात्मिकोन्नतेः परिपूर्णता दृश्यते । प्राचीनकालादेव मानवाः स्वचरित्रं शिक्षितुमत्र आजग्मुः । सर्वजनहिताय सर्वजनसुखाय तत्पराः जनाः तथाविधकर्मानुष्ठानेन विपत्पारावारं समुत्तितीर्षन्ति, स्वजन्म सफलं चिकीर्षन्ति, लौकिकपारलौकिकं च पुण्यं चिचीषन्ति । अर्थात् पुण्यभूमी भारतवर्षे मनुष्याः स्वकर्मणा नारायणस्य यात्रां कुर्वन्ति । महाभारतस्य वनपर्वणि उक्तमस्ति यत् अस्यां कर्मभूमौ भारतवर्षे जन्म ग्रहीत्वा मनुष्य अन्ते स्वर्गसुखकामनया सुरालयं गच्छन्ति –

कर्मभूमिमिमां प्राप्य पुनर्याति सुरालयम् ।[७]

कर्मभूमिरूपे भारतभूमिः पृथिव्यां प्रसिद्धा अस्ति । जम्बूद्वीपान्तर्गतं भारतवर्षं सर्वश्रेष्ठमस्तीति विष्णुपुराणे उक्तम् । यथा –

अत्रापि भारतं श्रेष्ठं जम्बूद्वीपे महामुने ।
यतो हि कर्मभूरेषा ह्यतोऽन्याभोगभूमयः ।।[८]

स्वर्गस्था देवा अपि स्वर्गापवर्गसाधककर्मभूमौ भारते जन्मग्रहीतुं लालायिताः भवन्ति । मनुष्ययोनिषु जन्म गृहीत्वा जनाः स्वानि शुभकर्माणि परमात्मनि समर्प्य निष्कामभावेन कर्माणि कृत्वा अन्तेऽनन्त एव लीयन्ते । अतः लिङ्गपुराणे उक्तं यत् –

इह स्वर्गापवर्गार्थे प्रवृत्तिर्यत्र मानुषी ।
तेषां च युगकर्माणि नान्यत्र मुनिपुंगवः ।।[९]

पुराणानुसारं विश्वस्मिन् भारतवर्षसमो द्वितीयो देशः प्रशस्तो नास्ति । समग्रेऽस्मिन् भूमण्डले भारतवर्षमद्वितीयोऽनुपमश्च देशोऽस्ति । राष्ट्रस्य समुन्नतेर्यावन्ति कल्याणकारिणी कर्माणि सन्ति तेषां वीजानि भारतवर्षे विद्यमानानि सन्ति ।

श्रीमद्भागवते कर्मभूमेः भारतस्य भूरि भूरि प्रशंसा वर्त्तते । सनत्कुमारस्य मतमस्ति यत्ते मनुष्याः धन्याः सन्ति ये भारतभूमौ जन्मालभन्त । ते सुखपूर्वकं स्वेषु कल्याणकारिकर्मसु प्रवृत्ताः सन्ति, स्वर्गं मोक्षं च लभन्ते । शिवपुराणे यथा –

आप्स्यन्ति धन्याः खलु ते मनुष्याः सुखैर्युताः कर्मणि सन्निविष्टाः ।
जनुर्हि येषां खलु भारतेऽस्ति ते स्वर्गमोक्षोभयलाभवन्तः ।।[१०]

ब्रह्मपुराणेऽपि कर्मभूमिभारतस्य प्रशंसायाम् अनेकानि सूकिवाक्यानि लभन्ते । यथा –

(i) "पृथिव्यां भारतं वर्षं कर्मभूमिरुदाहृता ।[११]

(ii) "धन्यास्ते भारते वर्षे जायन्ते ये नरोत्तमाः ।[१२]

(iii) "कः शक्नोति गुणान् वक्तुं भारतस्याखिलान् द्विजाः ।[१३]

पुण्यभूमिभारते जन्म गृहीत्वा यः मनुष्यः सत्कार्यात् विमुखः भवति सः अमृतकलसं त्यक्त्वा विषभाण्डं चिनोति । बृहन्नारदीयपुराणे यथोक्तम् –

सम्प्राप्य भारते जन्म सुकर्मसु पराङ्मुखः ।
पीयूषकलसं त्यक्त्वा विषभाण्डं स मार्गति ।।[१४]

एवं पुराणदृष्टौ कर्मसम्पादने स्वतन्त्रत्वात् भारतवर्षस्य मानवः समस्तैश्वर्यसम्पन्ने सर्वोत्कृष्टभोगभूमौ स्वर्गलोके हि केवलं शुभकर्मणां फलभोगेषु आसक्तेभ्यो देवेभ्योऽपि श्रेष्ठतरः प्रशस्यश्चास्ति ।

**(ग) राष्ट्रस्वतन्त्रतायाः महत्त्वम् –**

पुराणेषु स्वतन्त्रतायाः महत्त्वं प्रतिपादितम् । यः स्वतन्त्रतायाः आस्वादं जानाति सः अन्येभ्यः स्वतन्त्रतायाः विनयं करोति –

स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्यते ।[१५]

जीवनस्य सफलता स्वतन्त्रतायां निहताः सन्ति न तु परतन्त्रतायाः । यथोक्तं मार्कण्डेयपुराणे –

स्वधीनवृत्तेः साफल्यं न पराधीनवृत्तिना ।[१६]

स्वतन्त्रे समृद्धे च राष्ट्रे प्रत्येकं मनुष्यस्य स्वतन्त्रतापूर्वकं जीवनयापयितुम् अधिकारोऽस्ति । पराधीनवृत्तिमनुष्यस्य अनेकविधं शोषणं भवति । स्वतन्त्रतायाः विषये मार्कण्डेयपुराणेऽपि उक्तम् –

नरोऽपि परतन्त्रो यः तस्य कीदृङ् मनुष्यता ।[१७]

अतः अस्माकं सर्वेषां पावनं कर्त्तव्यमस्ति यत् देशस्य स्वतन्त्रता रक्षितुं मनसा, वाचा, कर्मणा प्रयत्नो विधेयः, परस्परं प्रेमभावः प्रसारयितव्यः । जागरुको भूत्वा ग्रामे ग्रामे, नगरे नगरे राष्ट्रभक्तिभावनायाः प्रचारः प्रसारश्च कर्त्तव्यः ।

**(घ) राष्ट्ररक्षार्थं कर्त्तव्यम् –**

स्वराष्ट्रस्य सुरक्षायै सौभाग्याय च पुराणेषु उपदेशाः उल्लिखिताः सन्ति । परिप्रेक्ष्येऽस्मिन् अवधानं दातव्यं यत् मार्कण्डेयपुराणे राष्ट्रनायकस्य भूरिशः प्रशंसा कृतास्ति । एवमेव राष्ट्रं प्रति आगतानां विपत्तीनां दूरीकरणाय यज्ञदानादीनां सन्देशमपि प्रददति पुराणानि । राष्ट्रस्य समुचिता व्यवस्ता कथं भवेत्? राष्ट्रसुरक्षायै सैन्यव्यवस्था कथं स्यात्? तत्सर्वं पुराणेषु विस्तृतरूपेण लिखितमस्ति । अत्रैव उपदिष्टमस्ति, यत् यः स्वराष्ट्रस्य विकासाय किमपि सुकृत्यम् अकृत्वैव स्वसुखसमृद्धिम् ऐश्वर्यं च वाञ्छति तादृशस्य स्वार्थपरायणस्य राष्ट्ररक्षकस्य सर्वाणि कार्याणि व्यर्थानि भवन्ति । विपरीतमेतस्य यः स्वार्थपरायणः न भवति, स्वराष्टरक्षायै सर्वस्वं समर्पयति, स ऐहिकलोकस्य सुखानि भुक्त्वा अनन्तरं स्वर्गं प्राप्नेति । अग्निपुराणस्य श्लोकोऽयं द्रष्टव्यः –

किं यज्ञैः तपसा तस्य प्रजा यस्य न रक्षिताः ।
सुरक्षिताः प्रजा यस्य स्वर्गस्य गृहोपमः ।।[१८]

न केवलं तावत् यदि राज्ञः प्रजाः संकटापन्नाः पिडीताश्च भवति तर्हि तादृशाः राजा चिरं यावत् नरकस्य यातनां प्रान्पोति । यथोक्तम् –

राष्ट्रपीडाकरो राजा नरके वसते चिरम् ।[१९]

पुराकाले राष्ट्रस्यास्य सञ्चालकः इन्द्रदेवता आसन्, पुनश्च अस्य सञ्चालनमृषिभिः आचार्यैः सम्पादितं सम्प्रति देशस्य राजनेतारः अस्य सञ्चनालनं कुर्वन्तः सन्ति । यतोहि राजा एव अस्य संञ्चालनकारणाद् नेतृत्वं करोति, अतः राज्ञः कृते पुराणे कथितं यत् –

राजा प्रजानां प्रथमं शरीरं प्रजाश्च राज्ञोऽप्रतिमं शरीरम् ।
रज्ञा विहीना न भवन्ति देशा देशैर्विहीना न नृपा भवन्ति ।।[२०]

राजा हि प्रजानां प्रधानं शरीरं प्रजाऽपि राज्ञोऽनुपमं शरीरमस्ति । राजानं विना देशो देशवासिनो वा स्थातुं न शक्नुवन्ति तथा देशवासिनं विना राजाऽपि न वर्द्धते । अतः उभयोः सौमनस्यावश्यकं तदैव राष्ट्रवर्द्धनं भवितुं शक्नोति । श्रेष्ठः राजा संरक्षितराष्ट्रस्य सर्वतोमुखीविकासं करोति । राजा

धर्मानुसारेण प्रजापालनं कृत्वा समाजव्यवस्थानां सम्यक् संचालनं करोति । प्रजानामनुरागेण राष्ट्रस्य राजलक्ष्मीर्वृद्धिं प्राप्नोति । यथा –

जनानुरागप्रभवा राज्ञो राज्यमहीश्रियः ।।[२१]

सर्वेषु पुराणेषु यत्र तत्र राष्ट्रवर्धनाय प्रार्थनाः वर्तन्ते । सर्वासां प्रजानां कल्याणं भरणपोषणं च राज्ञः दायित्वमासीत् । सम्पूर्णं राष्ट्रं सुघटितं भवेत्, राष्ट्रस्य सर्वविधं कल्याणं भवेत्, राष्ट्रं शं भवेत्, राष्ट्रस्य विभाजनं न भवतु एतान् भावान् परिपोषयन्ती अनेकानि सूक्तिवाक्यानि पुराणेषु दरीदृश्यन्ते । यथा –

(i) "यो राष्ट्रमनुगृह्णाति स राज्यं परिरक्षति ।[२२]

(ii) सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवते ।[२३]

(iii) धन्यास्ते र्य न राष्ट्रभङ्गकुलजयम् ।[२४]

स्वराष्ट्रस्य सुखाय शान्त्यर्थं च पुराणकारः वाञ्छति यत् राष्ट्रे सर्वे सुखिनः भवन्तु, बालाः प्रसन्नाः भवन्तु, गावः बहुक्षीरा भवन्तु, धरा सरसा भवतु, सर्वे निर्भयाः नियमयश्च सन्तु । सर्वत्र प्रसन्नता भवेत् । गर्भिण्यः वृद्धाश्च समर्थाः भवन्तु । वराहपुराणस्य केचन श्लोकाः द्रष्टव्याः –

आगतत्वं च सुमुखं समुचितेन वै पुनः ।
दिशः पश्य अधः पश्यः व्याधिभ्यो रक्ष नित्यशः ।।
प्रसीद स्वस्य राष्ट्रस्य राज्ञः सर्वबलस्य च ।
गर्भिणीनां च वृद्धानां व्रीहीणां च वनां तथा ।।
ब्राह्मणानां च सततं शान्तिं कुरु शुभं कुरु ।
अन्नं कुरु सुवृष्टिं च सुभिक्षमभयं तथा ।।
राष्ट्रं प्रवर्धतु विभो शान्तिर्भवतु नित्यशः ।
देवानां ब्राह्मणानां च भक्तानां कन्यकासु स ।
पशूनां सर्वभूतानां शान्तिर्भवतु नित्यशः ।।[२५]

विवेचनानेन वयं वक्तुं शक्नुमः यत् पुराणेषु राष्ट्रचिन्तनस्य तादृशानि सर्वाणि तत्त्वानि विद्यमानानि सन्ति यानि देशस्य एकतायैः, अखण्डतायै, प्राणिनां च कल्याणाय आवश्यकानि भवन्ति ।

अद्यत्वे समाजे लुण्ठन-अत्याचार-उत्कोच-भ्रष्टचार-दुराचार-प्रभृतयो दुष्प्रवृत्तयः सततं वर्धमानाः सन्ति । मानवो मानवं हि हिनस्ति अकारणम् । कारणं हि तत्र यत् जनानां मनोभ्यः हृदयेभ्यश्च राष्ट्रैक्यं, राष्ट्रभावना, विश्वबन्धुत्वभावना इत्यादीनि वेदभणितानि वाक्यानि प्रायः निसृतानि सन्ति । जनानां मनस्सु देशं प्रति, मानवं प्रति, समाजं प्रति, राष्ट्रं च प्रति पुनरपि सुभावना जागरिता भवेत् एतदर्थं पुराणेषु यथास्थानं वर्णितानि राष्ट्रचिन्तनपरकाणि तथ्यानि समाजस्य पुरतः नूनमेवं संस्थापनीयानि भविष्यन्ति । पुराणकारस्य समग्रमपि चिन्तनं राष्ट्रकल्याणाय, राष्ट्राभिवर्धनाय एव अस्ति । इति शम् ।

**सन्दर्भटिप्पणी –**

१. ब्रह्मपुराणम् – १९/२५, विष्णुपुराणम् – २/३/२४, गरुडपुराणम् – १/६ ।
२. वायुपुराणम् – ४५/७६ ।
३. मत्स्यपुराणम् – ११३/५ ।
४. वायुपुराणम् – ३३/५१-५२ ।
५. ब्रह्मपुराणम् – ११/१ ।
६. मनुस्मृतिः – २/२० ।
७. महाभारतम्, वनपर्वणि – १८१/३१ ।
८. विष्णुपुराणम् – २/३/२२ ।
९. लिङ्गपुराणम् – ५२/३२ ।
१०. शिवपुराणम् – १८/२० ।
११. ब्रह्मपुराणम् – २७/२ ।
१२. तत्रैव - २७/३२ ।
१३. तत्रैव - २७/७८ ।
१४. बृहन्नारदीयपुराणम् – ३/५२ ।
१५. ब्रह्मपुराणम् – २४५/३० ।
१६. मार्कण्डेयपुराणम् – ११५/३७ ।
१७. तत्रैव – २४/२९ ।
१८. अग्निपुराणम् – ११५/३ ।
१९. तत्रैव – २२३/७ ।
२०. विष्णुपुराणम् – ६८/५८ ।
२१. अग्निपुराणम् – २२५/३४ ।
२२. मत्स्यपुराणम् – २१९/३४ ।
२३. भविष्यपुराणम् – ३/२/३५/१४ ।
२४. गरुडपुराणम् – ११५/३ ।
२५. वराहपुराणम् – ११२/८-११ ।

**सहाचार्यः, संस्कृतविभागः, सबं सजनीकान्तमहाविद्यालयः,**
**लुटुनिया, पश्चिममेदिनीपुरम्, पश्चिमबङ्ग**